कमाल का मज़ा...गोल्ड स्पॉट का मज़ा







tificially flavoured. Contains no fruit juice or fruit pulp.

serve chilled

Trikaya-GS-1-85-HIN

कविहृदयम् -

# साफल्यबीजम्

**आयत्यां गुणदोषज्ञः तदात्वे क्षिप्रनिश्चयः ।**
**अतीते कार्यशेषज्ञः विपदा नानुभूयते ॥**

कार्येषु विघ्ना सहजाः । कुत्रचित् दैवकारणतः विघ्नाः आपतेयुः नाम । तथाऽपि बहुत्र अस्माकम् अविवेकतः एव वयं विघ्नान् स्वागतीकुर्मः । एवं तर्हि अस्मन्निमित्तकाः विघ्नाः कथं परिहरणीयाः ?

तदर्थं विवेकज्ञानम् अपेक्षितम् । प्रथमं तावत् कार्यस्वीकरणतः पूर्वम् एव तस्य गुणावगुणाः साधकबाधकानि च चिन्तनीयानि । विचिन्त्य एव आग्रिमपदं निधातव्यम् ।

यदा कार्यं साक्षात् पुरतः स्थितं तदा चिन्तनस्य न अवकाशः । झटिति निर्णयः स्वीकरणीयः । एतत् द्वितीयम् ।

तृतीयं तु कार्यानन्तरं पुनरपि सिंहावलोकनं करणीयम् । दोषाः चेत् किमर्थम् उत्पन्नाः ? यथाचिन्तितं न सम्पन्नं चेत् तत्र किं कारणम् ? इत्यादिषु विषयेषु सम्यक् चिन्तनीयम् ।

एवं च स्वीकरणीयस्य विषये पूर्वचिन्तनं, प्राप्ते कार्ये योग्य-निर्धारणं, कृतस्य कार्यस्य पुनश्चिन्तनम् - एतत् त्रयम् एव साफल्यस्य बीजम् ।



# चन्दमामा

आगस्ट् – १९८५

*

## अन्तरङ्गम्




प्रतिकृतिमूल्यम् रू. २-००

वार्षिकं ग्राहकशुल्कम् रू. २४-००

# चन्दमामा

संस्थापकः 'चक्रपाणिः' सञ्चालकः 'नागिरेड्डी'

## संस्कृतं किमर्थम् अध्येतव्यम् ?

वस्तुतः एतत्प्रश्नस्य उत्तरस्य अन्वेषणतः पूर्वम् अन्यः विषयः चिन्तनीयः- 'भाषा किमर्थम् अध्येतव्या ?' इति। 'भावप्रकटनार्थं व्यवहारार्थं च' इति सामान्यतः उत्तरम्। तर्हि यस्मिन् राज्ये अन्यराज्यीयाः सन्ति तेऽपि तद्राज्यस्य व्यावहारिकभाषां जानीयुः इति आग्रहः दृश्यते। अन्यराज्यीयानां व्यवहारार्थम् आंग्लभाषा तन्मातृभाषा च अस्ति एव। एवं स्थिते तैः अपि तत्प्रदेशस्य भाषा ज्ञातव्या इति किमर्थम् आग्रहः ? 'एषः अभिमानस्य प्रश्नः। यत्र ते निवसन्ति तत्रत्या भाषा तैः अवश्यं ज्ञातव्या पोषणीया च' इति किल उत्तरम् ?

एवं तर्हि यथा राज्ये निवसन्तः राज्याभिमानेन राज्यभाषां पठामः तथैव देशे निवसद्भिः देशाभिमानदृष्ट्या काचित् भाषा पठनीया एव किल ? सा च संस्कृतभाषां विना का अन्या भवेत् या च प्रान्तादिभेदविस्मारिका राष्ट्रैक्यसम्पादिका च अस्ति। सर्वाः भाषाः प्रान्तसम्बद्धाः। संस्कृतम् एकम् एव अस्ति यत् प्रान्तीयभावं कदापि न उद्बोधयति।

सम्पुटः—२ अगस्ट्-८५ सञ्चिका—५

प्रतिकृतिमूल्यम् रू. २/- वार्षिकं ग्राहकशुल्कम् रू. २४/-






# चन्दमामा प्रजल्पति



## चन्द्रग्रहस्थेन सिक्थवार्तिकाप्रकाशः किं द्रष्टुं शक्यते ?

पृथ्वी-चन्द्रयोः यावत् अन्तरं तावत् दूरे स्थितः सिक्थवर्तिकायाः प्रकाशः द्रष्टुं शक्यः किम् ? खगोलविज्ञानिनः वदन्ति यत् १९९३तमे वत्सरे एतत् अपि शक्यः भविष्यति इति। केलिफोर्निया विज्ञानिनः एतत्कार्यार्थं फालोमारपर्वतस्य उपरि एकस्य विशिष्टस्य दूरदर्शकस्य निर्माणं कुर्वन्तः सन्ति। एतस्य साहाय्येन १२०००० कोटिप्रकाशवर्षेभ्यः पूर्वतनम् अपि वस्तु पृथ्वीतः एव द्रष्टुं शक्यते।

## गीतप्रियाः तिमिङ्गिलाः



अलास्का-सोवियत्‌रशियादेशयोः मध्ये स्थिते समुद्रप्रदेशे एकत्र जलसङ्ग्रहकारणतः कदाचित् सहस्राधिकाः तिमिङ्गिलाः एकीभूताः। सोवियत्नौकादलं एतेषां अन्यत्र प्रेषणार्थं कुल्यायाः निर्माणम् अकरोत्। किन्तु शब्देभ्यः भीताः तिमिङ्गिलाः ततः न बहिर्गताः। इतरे अपि प्रयत्नाः यदा विफलाः जाताः तदा विज्ञानिनः सङ्गीतं श्रावितवन्तः। तेन च परवशाः तिमिङ्गिलाः कुल्यामार्गेण निर्गत्य समुद्रं प्रविष्टवन्तः।



## ग्रहान्तरवासिनां स्वागतार्थम्

कश्चित् अन्यग्रहात् आगमिष्यति चेत् सः पृथिव्यां कुत्र अवतरेत् ? एतस्य उत्तररूपेण अन्तानियो वाजक्वेज अलावा नामकः वदति यत् अन्यग्रहवासिनः मेक्सिकन् नगतरतः ८० की. मी. दूरे स्थितायाम् 'ओरियण्टल' पर्वतमालायां कुत्रचित् अवतरेयुः इति। एतदनुसारम् एव आगमिष्यताम् अतिथीनां स्वागतार्थम् एकं विमानस्थानकं निर्मीयमाणम् अस्ति।

# भवन्तः जानन्ति वा ?

१. भूमेः कतमः भागः जलावृतः अस्ति ?
२. सूर्यस्य अतिसमीपे स्थितः ग्रहः कः ?
३. ग्रहेषु अतिशीतलः कः ?
४. ग्रहेषु अतिविशालः कः ?
५. भूगोलस्य व्यासः कः ?

(उत्तराणि ६४ तमे पृष्ठे)



# बुद्धिमान् कुन्दकः

विजयनगरस्य राजा चन्द्रसेनः। एकदा सः अन्तःपुरे उपविश्य पुत्रस्य शिक्षणविषये महाराज्ञ्या सह चर्चां कुर्वन् आसीत्। तत्सन्दर्भे एकः काकः वातायनमार्गतः भवनप्रवेशम् अकरोत्। एतत् दृष्ट्वा दासी तं काकं हस्ततालपूर्वकं बहिः प्रेषितवती। काकस्य एतत् व्यवहारं पश्यतः महाराजस्य मनसि कश्चन विचारः उत्पन्नः।

तं विचारं सद्यः एव कार्यान्वितं कर्तुम् इच्छन् राजा मन्त्रिणम् आगन्तुं सूचनां प्रेषितवान्। मन्त्री यदा आगतः तदा राजा उक्तवान्- "मन्त्रिवर्य! अस्माकं राज्ये विद्यमानानां काकानां सङ्ख्यां यः समीचीनं वदति तस्मै योग्यः पुरस्कारः दीयते इति वार्ता सडिण्डिमघोषं प्रसारयतु। किन्तु निर्दुष्टां सङ्ख्यां वदामि इति आगत्य यः असत्यं वदति तं त्रिंशतिकशाघातेन दण्डयामः। एषा वार्ता एतत्क्षणे एव राज्ये सर्वत्र प्रसारणीया" इति।

सर्वत्र वार्ता प्रसारिता। एकः सप्ताहः अतीतः। किन्तु कोऽपि काकानां सङ्ख्यां वक्तुं राजसमीपम् न आगतः।

कुन्दकः नाम युवकः एतां विचित्रघोषणां श्रुतवान्। सः अध्ययनं समाप्य इदानीम् उद्योगान्वेषणे निरतः आसीत्। तदर्थम् एव सः राजधानीम् आगतः आसीत् अपि। सः महाराजेन प्रसारितां वार्तां श्रुत्वा आश्चर्यचकितः। चन्द्रसेनस्य सामर्थ्यविषये अपि तस्य मनसि सन्देहः उत्पन्नः।

सः साक्षात् राजसभां गतवान्। राजानं प्रणम्य उक्तवान् "महाराज! अहं शिक्षितः कश्चन निरुद्योगी। उद्योगान्वेषणं कुर्वन् नगरेषु ग्रामेषु च सर्वत्र अटितवान्। अहं भवतः राज्यस्य काकानां किम्, अजानां धेनूनां वृषभाणां



महाराज !"

"सङ्ख्या असत्यम् उक्ता चेत् विंशति-कशाघाताः प्राप्यन्ते इति स्मरति किल?" इति पृष्टवान् राजा।

"आं महाराज! भवतः नियमम् अहं स्मरामि। अस्माकं विजयनगरे इदानीं त्रिलक्ष-विंशतिसहस्रकाकाः (३,२०,०००) सन्ति। मया सम्यक गणयित्वा एव एवम् उच्यते। अतः अत्र दोषः कोऽपि नास्ति इति आत्म-विश्वासपूर्वकं वदामि। यदि मम वचनम् असत्यं इति प्रमाणितं भवेत् तर्हि अहं कशाघातान् सोढुं सिद्धः" इति उक्तवान् कुन्दकः।

"एवं वा? भवतः वचनं सत्यं वा असत्यं वा इति ज्ञातुम् अहं सर्वेषां नगरप्रमुखानां ग्राम-प्रमुखानां च कृते वार्ता प्रेषयामि। ते स्वस्व-प्रदेशस्य काकानां सङ्ख्यां ज्ञात्वा मां सूच-यिष्यन्ति" इति उक्तवान् राजा।

"महाराज! इदानीम् अहं निवेदितवान् यत् अस्माकं राज्ये त्रिलक्षविंशतिसहस्रकाकाः सन्ति इति। किन्तु अधिकारिभिः प्रेषितायां सङ्ख्यायां कदाचित् भेदः दृश्येत। यतः काकाः स्वेच्छाचारिणः। जन्मभूमिविषये तेषां प्रीतिः सर्वथा नास्ति। सीमाबन्धः अपि नास्ति एव। अतः पार्श्वराज्यतः केचन आगताः अपि भवन्ति। तदा सङ्ख्यायां वृद्धिः

कपोतानां शुकानाम्- एवं सर्वेषां सङ्ख्यां सम्यक् जानामि। कदाचित् आवश्यकं भवेत् इति दृष्ट्या अहं सञ्चारसमये सर्वं लिखितवान् अस्मि। किन्तु केवलम् उलूकानां सङ्ख्यां न जानामि। यतः ते रात्रौ सञ्चरन्ति किल?" इति।

कुन्दकस्य वचनं श्रुत्वा मन्दहासं प्रकटयन् राजा उक्तवान्- "कुन्दक! यदि भवतः वचनं सत्यं, तर्हि पक्षिणां विषये भवतः अभिरुचिः अभिनन्दनार्हा। किन्तु अहं केनचित् कारणेन इदानीं काकानां सङ्ख्यां केवलं ज्ञातुम् इच्छामि" इति।

तदा कुन्दकः उक्तवान्- "अहं काकानां सङ्ख्यां अन्यूनाधिकं वक्तुं शक्नोमि

दृश्येत। इतः केचन अन्यत्र गताः चेत् न्यूनता अपि दृश्येत। अतः सङ्ख्यायां भेदः दृश्यते चेत् मम किमपि दायित्वं नास्ति" इति उक्तवान् कुन्दकः।

कुन्दकस्य कुशलतापूर्णम् उत्तरं श्रुत्वा सर्वे सभासदाः सन्तुष्टाः। महाराजस्य वृथाप्रयासम् एषः परोक्षतया आक्षिपन् अस्ति इति ते ज्ञातवन्तः एव। राजा अपि कुन्दकस्य उत्तरेण बहु सन्तुष्टः। सः पृष्टवान्- "कुन्दक! भवतः उत्तरेण अहं सन्तुष्टः। किं पुरस्कारम् इच्छति भवान्?" इति।

कुन्दकः क्षणकालानन्तरम् उक्तवान्- "महाराज! मम औद्धत्यं क्षाम्यतु भवान्। पुरस्काररूपेण धनादिकं किमपि न इच्छामि। सर्वदा देशहितचिन्तनम् एव मम कार्यम्। निरर्थकप्रश्नानाम् उत्तरम् अन्विष्यन् अटितुम् अहं न इच्छामि। अहं देशाटनं कृतवान् इति तु सत्यम्। अतः देशे कीदृशी परिस्थितिः इति अहं स्पष्टं जानामि। कुत्रचित् पातुम् अपि जलं नास्ति। पुनः कुत्रचित् आहाराभावेन जनाः मरणावस्थाम् आपन्नाः सन्ति। कुत्रचित् अतिवृष्टिः, कुत्रचित् अनावृष्टिः। यदि अनुभविभिः निपुणैः सह एतद्विषये परामर्शः क्रियेत तर्हि पूर्वोक्तसमस्यानां निवारणं न कष्टकरम्। तदा मादृशनिरुद्योगिनः अपि न भवेयुः। एषः एव मम अपेक्षितः पुरस्कारः" इति।

महाराजः सन्तोषं प्रकटयन् उक्तवान्-



"कुन्दक ! अहं भवन्तं मुख्यपरामर्शकस्य स्थाने नियोजयामि। भवान् समग्रे देशे अटितवान्। कुत्र किम् आवश्यकम् इति सम्यक ज्ञानम् अस्ति भवतः। प्रजानां कष्टस्य निवारणे भवादृशाः एव अपेक्षिताः। अतः अद्य आरभ्य भवान् मम आस्थाने तिष्ठतु। अस्तु किल ?" इति।

"देशस्य हितार्थं भवान् यथा आदिशति तथा कर्तुं सिद्धः अहम्। यावच्छक्यं देशसेवा करणीया इत्येव मम जीवनस्य लक्ष्यम्" इति उक्तवान् कुन्दकः।

"अन्यदपि कार्यं भवते अर्पयितुम् इच्छामि अहम्। मम दशवर्षीयः एकः पुत्रः अस्ति। तस्य विद्याभ्याससंस्कारः एव न जातः। सुदूरं गुरुकुलं प्रेषयितुम् अस्माकम् इच्छा नास्ति। तस्य विद्याभ्याससमस्यां भवान् एव परिहर्तुं समर्थः" इति उक्तवान् राजा।

"मया अपि बाल्ये गुरुकुले सम्यक् एव एव अभ्यस्तम्। आचार्याः महापण्डिताः आसन्। किन्तु अनुभवजन्यज्ञानस्य अभावतः गुरुकुलविद्या प्रयोजनकारिणी न जाता। पूर्वम् अधीता विद्या राज्यपालने कियत् उपकरोति इति भवान् जानाति एव। पुस्तकीयज्ञाने लौकिकज्ञाने च भवान् दक्षः। अतः मम पुत्रः कुमारसेनः राज्यपालने दक्षः यथा भवेत् तथा करणीयम्। सर्वसमर्थः भवान् एतत् दायित्वं निरायासं समर्थतया च निर्वहति इति मम विश्वासः" इत्यपि उक्तवान् सः।

"महाराज ! महत्कार्यं मद्वशे अर्पितं भवता। भावी राजा मदधीने अर्पितः। भवतः विश्वासः अन्यथा यथा न स्यात् तथा व्यवहर्तुं सर्वविधप्रयत्नं करोमि" इति आत्मविश्वासपूर्वकम् उक्तवान् कुन्दकः।

अनन्तरं कुन्दकः मुख्यपरामर्शकस्थाने नियुक्तः, कुमारसेनस्य शिक्षकस्थाने अपि। उभयदायित्वम् अपि समर्थतया निर्वहन् सः अल्पे काले 'दक्षः' इति सर्वत्र प्रसिद्धः अभवत्।






-८-

[मायाविनी कापालिका चन्द्रवर्माणं भोजितवती। प्रसिद्धमान्त्रिकस्य शङ्खस्य समीपे विद्यमानम् अपूर्वशक्तिशालिनं शङ्खम् आनेतुम् अनुरोधं कृतवती च। एतस्य शङ्खस्य वैशिष्ट्यं वदन्ती उक्तवती यत् केषाञ्चित् मूलानां रसः एतद्द्वारा यदि पीयते तर्हि एकसहस्रवर्षाणि यावत् वृद्धत्वं न प्राप्यते इति। चन्द्रवर्मा तस्याः प्रार्थनाम् अङ्गीकृत्य शङ्खम् अनेतुं प्रस्थितः। कालनागः नाम सर्पः मार्गदर्शकरूपेण तेन सह आगतवान्। ततः . . . . . ]

कालनागः मार्गं प्रदर्शयन् अग्रे गतः। चन्द्रवर्मा मौनं तम् अनुसृतवान्। कालनागः इतस्ततः पश्यन् फणाः चालयन् फूत्कारं कुर्वन् च अग्रे गच्छति। मार्गे बहवः क्रूरजन्तवः चन्द्रवर्मणः उपरि आक्रमणं कर्तुम् आगतवन्तः। किन्तु कालनागं दृष्ट्वा ते ततः पलायितवन्तः।

अरण्यमार्गेण यदा अग्रे गतं तदा चन्द्रवर्मणः मनसि काचित् शङ्का उत्पन्ना। "कापालिका कालनागेन सह मनुष्येण सह इव सम्भाषणं करोति स्म। मानवभाषया एव आदिशति स्म च। एतेन सिध्यति यत् कालनागः मानवभाषां जानाति इति। किन्तु कालनागः मनुष्यभाषया सम्भाषमाणः कदापि न दृष्टः। तर्हि एषः सम्भाषणं कर्तुं शक्नोति वा न वा इति परीक्ष्य एव



ज्ञातव्यम् ।''

एवं चिन्तयित्वा चन्द्रवर्मा कालनागस्य समीपं गत्वा पृष्टवान्- ''अये मित्र ! घनारण्ये भवान् मया सह अस्ति इति तु मम सन्तोषस्य विषयः। भवतः साहाय्यं यदि न स्यात् तर्हि अहं मार्गभ्रष्टः सन् कष्टम् अनुभवेयम्। भवतः साहाय्यम् अहं कदापि न विस्मरिष्यामि। एतत् अरण्यं तीर्त्वा गन्तुम् इतोऽपि कियद्दूरं गन्तव्यम् ?'' इति।

चन्द्रवर्मणः प्रश्नं श्रुत्वा कालनागः गमनं स्थगितवान्। तिस्रः अपि फणाः उन्नीय एकदृष्ट्या चन्द्रवर्माणं पश्यन् जिह्वाः बहिः प्रसार्य कमपि अस्पष्टं ध्वनिम् उत्पादितवान्। सः ध्वनिः फूत्कारध्वनितः भिन्नः आसीत्। विभिन्नध्वनिविशेषाणां सम्मिश्रणम् आसीत् तत्।

चन्द्रवर्मा एतं विशेषध्वनिं श्रुत्वा अपि कमपि अर्थं न ज्ञातवान्। तदा कालनागः फणाः इतस्ततः चालयन्- 'भवतः प्रश्नम् अहं ज्ञातवान्' इति सङ्केतेन सूचितवान्। अनुसृतं मार्गं त्यक्त्वा मार्गान्तरम् आश्रित्य गच्छन् आत्मानम् अनुसर्तुं चन्द्रवर्माणं सङ्केतेन सूचितवान् च।

'कालनागः किमपि रहस्यं सूचयितुम् इच्छति' इति चन्द्रवर्मा ज्ञातवान्। अतः सः कालनागस्य सङ्केतानुसारं तं निर्भयम् अनुसृतवान्। अन्धकारमयम् अरण्यं तरन्तौ तौ अल्पे एव काले कस्यचित् जलपातस्य समीपं गतवन्तौ।

जलपातस्य समीपे एव कालनागः गमनं स्थगितवान्। फणाः उन्नमय्य समीपस्थं कञ्चित् विचित्रं वृक्षं पश्यन् स्थितवान्। चन्द्रवर्मा अपि तस्यां दिशि स्वदृष्टिं प्रसारितवान्। तदा तस्मात् वृक्षतः विकटाट्टहासध्वनीन् सः श्रुतवान्। अकस्मात् श्रुतेन तेन ध्वनिना सः स्तब्धः अभवत्। वृक्षं यदा स्पष्टं दृष्टवान् तदा तस्य शरीरे तीव्रं कम्पनम् आरब्धं च।

उन्नतस्य गोपुराकारेण विशालतया प्रसृतस्य तस्य वृक्षस्य शाखासु विविधानां पशूनां पक्षिणां

च शिरांसि उत्तोलितानि दृश्यन्ते स्म। चन्द्र-वर्मणः कालनागस्य च दर्शनेन तेभ्यः मुखेभ्यः विविधाः ध्वनयः उत्पन्नाः।



चन्द्रवर्मा वृक्षस्य रहस्यम् अजानन् आश्चर्यचकितया दृष्ट्या वृक्षं पुनः पुनः परिशीलयन् कालनागं दृष्टवान्। कालनागः तु मौनं चन्द्रवर्माणं पश्यन् आसीत्। अतः चन्द्रवर्मा पृष्टवान्- "कालनाग! एषः वृक्षः वा? उत वृक्षरूपेण स्थितः राक्षसः वा"? इति।

कालनागः उत्तररूपेण कामपि प्रतिक्रियां न प्रदर्शयन् जलपातस्य दिशि प्रस्थितः। जलपातं परिक्रम्य तस्य विचित्रवृक्षस्य समीपं गत्वा स्थितवान्। तदानीं कोलाहलः पूर्वापेक्षया प्रवृद्धः। तत् श्रोतुम् असमर्थः चन्द्रवर्मा हस्ताभ्यां कर्णौ पिधाय स्थितवान्। पुनः चिन्तितवान् च- "कीदृशपरिस्थितौ पतितः अहम्! कालनागः वञ्चनया मां मारयितुं प्रयत्नं करोति चेत् अहं प्रतिक्रियारूपेण किं वा कर्तुं शक्नोमि? इदानीं कापालिकायाः वशे अस्मि अहम्। बाहुबलं खड्गः वा आत्मरक्षणे अपर्याप्तौ एव। मदीयं हिताहितं कापालिकायाः अधीनम् अस्ति" इति।

कालनागः चन्द्रवर्मणः समीपम् आगत्य वृक्षं पश्यन् सङ्केतेन किमपि सूचितवान्। 'वृक्षम् आरोढुं मां सूचयन् अस्ति एषः' इति ज्ञातवान् चन्द्रवर्मा। सः खड्गं हस्ते स्वीकृत्य वृक्षस्य समीपं गत्वा खड्गेन वृक्षं बलेन ताडितवान्। तदा उत्पन्नेन कोलाहलेन समग्रम् अरण्यं व्याप्तम् अभवत्। समीपवृक्षेषु स्थिताः पक्षिणः कपयः च भीत्या पलायितवन्तः।

कालनागः अपि किञ्चित् भीतः इव। फणाः सङ्कोचयन् सः चन्द्रवर्मणः समीपम् आगतवान्।

चन्द्रवर्मणः तु एतद्विषये लक्ष्यं न आसीत्। सः चिन्तयन् आसीत् यत्- वृक्षेषु दृश्यमानानि भयङ्करशब्देन भयोत्पादकानि एतानि पशुपक्षिणां शिरांसि खड्गेन इदानीं पातयेयं वा न वा इति।



तत् फलं कालनागः स्वमुखेन आनीय चन्द्रवर्मणः हस्ते दत्तवान्। चन्द्रवर्मा फलस्य किञ्चन भागं खादितवान्। ततः सः काल-नागस्य हासं श्रुतवान्। तेन किमपि उच्यमानम् अपि श्रुतवान्-

"चन्द्रवर्मन्! अस्मिन् वृक्षे स्थितानां मुखानां रहस्यम् इदानीं भवान् ज्ञातवान् किल"? इति।

एतेन समग्रं रहस्यं चन्द्रवर्मणा ज्ञातम्। तस्य फलस्य खादनेन इदानीं सः कालनागस्य भाषां स्पष्टं ज्ञातुं शक्नोति। एतावत्पर्यन्तं तु कालनागस्य भावनाः केवलं सङ्केतेन ज्ञातव्याः आसन्। इतः परं तु सः स्पष्टरूपेण ज्ञातुं शक्नोति।

"चन्द्रवर्मन्! इदानीं भवान् यथा मम भाषां ज्ञातुं शक्नोति तथैव इतःपरं सर्वेषां प्राणिनां भाषां स्पष्टं ज्ञातुं प्रभवति। एतस्य फलस्य प्रभावेण एतत् सिद्धम्। मान्त्रिकस्य समीपं गन्तुं तत्समीपात् शङ्खम् आनेतुं च एषा शक्तिः उपकरोति। अग्निपक्षिणः भाषाम् अपि भवान् ज्ञातुं शक्नोति। किन्तु तस्य पक्षिणः विषये भवता सर्वदा जागरूकतया भवितव्यम्। यतः सः अग्निपक्षी अतीव अपायकारी। तथापि भवान् भवतः प्रयत्ने विजयं प्राप्स्यति इत्यत्र मम दृढः विश्वासः अस्ति" इति उक्तवान् कालनागः।

कालनागः वृक्षस्य समीपं गत्वा वृक्षम् आलिङ्गितवान्। वृक्षशाखासु स्वदृष्टिं प्रसारितवान् च। तदा 'कालनागः वृक्षम् आरोढुं सूचयति' इति ज्ञात्वा चन्द्रवर्मा वेगेन वृक्षम् आरूढवान्।

वृक्षेषु दृश्यमानानां पशुपक्षिमुखानां कोला-हलः पूर्वापेक्षया प्रवृद्धः। चन्द्रवर्मा निर्भयेन उपशाखाम् एकाम् आरुह्य व्याघ्रमुखसहितां समीपस्थां शाखां खड्गेन कर्तितवान्। अपर-क्षणे तत् व्याघ्रमुखं सशब्दम् अधः पतितम्। किन्तु अहो आश्चर्यम्! भूमेः स्पर्शनेन तत् मुखं तत्क्षणे एव सुन्दरफलस्वरूपेण परिवृत्तम् अभवत्।

चन्द्रवर्मा वृक्षतः अवतीर्णः। भूमौ पतितं



इदानीं चन्द्रवर्मणः उत्साहः द्विगुणितः जातः। कालनागं कृतज्ञताभावेन पश्यन् चन्द्रवर्मा उक्तवान्- "कालनाग! भवता अहं बहु उपकृतः अस्मि। भवतः साहाय्येन एव इदानीम् अहं पशुपक्षिणाम् अपि भाषां ज्ञातुं शक्नोमि। प्रत्युपकाररूपेण अहं किं कर्तुं शक्नोमि? वदतु" इति।

कालनागः खेदेन शिरः अवनमय्य स्थितवान्। मन्दस्वरेण उक्तवान् च- "युवराज! भवता कश्चन अल्प उपकारः करणीयः। किन्तु तत् इदानीं न सिध्यति। तदर्थं भवान् शङ्खम् यावत् मान्त्रिकतः न आनेष्यति तावत् मया प्रतीक्षा करणीया भविष्यति" इति।

तदा कालनागं संशयदृष्ट्या पश्यन् चन्द्रवर्मा उक्तवान्- "मित्र! भवान् वस्तुतः जन्मना सर्पः एव वा? उत मानवः सन् कारणान्तरेण सर्पत्वं प्राप्तवान् वा? तदस्तु, कार्यसिद्धौ विलम्बः स्यात् चेत् अपि, मया किं कार्यं करणीयम् इति सूचयतु" इति।

"मित्र! कश्चन कालः आसीत् यत्र च अहं मानवः आसम्। शङ्खमान्त्रिकस्य शिष्यः च। शङ्खमान्त्रिकस्य आदेशानुसारं कापालिकायाः हानिं प्रापयितुम् अहम् अत्र आगतः। दौर्भाग्यवशात् मम प्रयत्नः सफलः न जातः। तस्य परिणामतः मया एतत् रूपं प्राप्तम्। कापालिका इदानीं मया सह सेवकः इव व्यवहरति। अद्यापि सा मयि न विश्वसिति। तथापि मम भविष्यम् उज्ज्वलम् अस्ति इति तु विश्वासः अस्ति एव। भवान् भवतः प्रयत्ने सफलतां प्राप्य आगच्छतु। तदा एतस्मात् तुच्छजीवनात् माम् उद्धर्तुम् अर्हति" इति उक्तवान् कालनागः।

"एतादृशलघुविषयार्थं तावत्पर्यन्तं प्रतीक्षा किमर्थं करणीया? वयम् इदानीम् एव कापालिकासमीपं प्रतिगच्छामः। 'भवते मानवरूपं ददातु' इति अहं ताम् अनुरोधपूर्वकं प्रार्थयामि। कापालिका मम वचनं न तिरस्करोति इति अहं स्पष्टं जानामि। सा



व्यवहारेण कापालिका चेदपि स्वभावेन साधुः एव। मयि तस्याः विशेषप्रीतिः इति अहं स्वानुभवेन ज्ञातवान् अस्मि। अतः इदानीम् एव प्रतिगच्छामः'' इति चन्द्रवर्मा सान्त्वनम् उक्तवान्।

कालनागः चन्द्रवर्मणः वचनं निराकुर्वन् उक्तवान्- ''युवराज! अविचिन्त्य किमपि कार्यं न करणीयम्। पूर्वापरं सम्यक् आलोच्य एव पदं स्थापनीयम्। अन्यथा वयं विपदग्रस्थाः भवेम।

अन्यच्च भवान् कापालिकायाः स्वभावं सम्यक् न जानाति। सा सन्देहशीला। यदि इदानीम् एव आवां प्रतिगमिष्यावः तर्हि 'आवां परस्परं कुतन्त्रं समालोच्य प्रत्यागतौ' इति सा चिन्तयेत्। एवं चेत् मम इव भवतः अपि अनिष्टं सिध्यति। अहं बहुकालतः सर्पजीवनं यापयन् अस्मि। इतोऽपि किञ्चित् प्रतीक्षणेन मम कापि हानिः न भविष्यति। अस्माभिः सर्वदा विश्वासः परिरक्षणीयः। तेन एव वयं बहु साधयितुं शक्नुमः। विश्वासः एकवारं नष्टः चेत् पुनः वयम् असहायाः भविष्यामः। अतः आवयोः विषये कापालिकायाः मनसि सन्देहः यथा न उत्पद्येत तथा जागरूकतया व्यवहर्तव्यम्। बहु विचिन्त्य अग्रिमं पदं स्थापनीयम्। सा कापालिका महाधूर्ता। भवान् तस्याः कार्यं सफलतया सम्पादयिष्यति चेदपि सा प्रत्युपकारं कुर्यात् इति मम तु विश्वासः नास्ति। स्वलाभं प्राप्य सा अस्मान् नाशयेत् अपि। तत् यथाकथम् अपि भवतु। वयम् इदानीं विवेकपूर्णतया व्यवहरेम। अतः इदानीं स्वीकृते कार्ये अग्रे गमनम् एव उचितम्'' इति।

कालनागस्य वचनम् अङ्गीकारार्हम् एव आसीत्। यतः मान्त्रिकाः कदापि विश्वासार्हाः न। कदा कस्य विषये ते सन्देहं प्रकटयन्तः कदा वा कं पीडयन्ति इति कोऽपि न जानाति एव।

चन्द्रवर्मा कालनागस्य वचनम् अङ्गीकृतवान्। अग्रिममार्गम् अनुसृतवान् च। कालनागः यथापूर्वं मार्गं प्रदर्शयन् अग्रे गतवान्।



मध्याह्नसमये तौ तत् अरण्यं तीर्त्वा अग्रे गतवन्तौ। इदानीं परितः वृक्षाः विरलतया दृश्यन्ते। महोन्नताः पर्वताः दूरतः परिदृश्यन्ते। पर्वतेषु नदीप्रवाहः रम्यतया दृश्यते। वस्तुतः सः प्रदेशः नयनमनोहरः।

कालनागः गमनं स्थगयन् उक्तवान्- "युवराज! इदानीम् अहं प्रतिप्रस्थितः। इतः-परं भवता एकाकिना गन्तव्यं भविष्यति। अग्रे पर्वतप्रदेशस्य मार्गे भवता पदे पदे कष्टानि सम्मुखीकरणीयानि भवेयुः। तथापि धैर्यच्युतः न भवतु। भवान् तु पशुपक्षिणां भाषां जानाति एव। तथैव भवान् शूरः अपि। अतः विजय-प्राप्तौ कोऽपि सन्देहः नास्ति" इति।

कालनागः चन्द्रवर्मणः अनुमतिं प्राप्य फूत्कारं कुर्वन् प्रतिगतवान्। यावत् सः दृष्टिपथात् न च्युतः तावत् चन्द्रवर्मा तं पश्यन् आसीत्। अनन्तरं दीर्घं निश्वस्य अग्रे सावधानतया पदं स्थापितवान्।

सः मार्गः शिलाभिः कण्टकैः गर्तैः च आकीर्णः आसीत्। तत्र तत्र अत्युन्नताः वृक्षाः अपि दृश्यन्ते स्म। तत्प्रदेशे विहरतां पक्षिणां कलरवं विना अन्यः कोऽपि शब्दः न आसीत् एव।

चन्द्रवर्मा पक्षिणां भाषां ज्ञातुं समर्थः आसीत् किल! पक्षिणः परस्परं वदन्ति स्म- "मित्राणि! जागरूकाः भवन्तु। कश्चित् नूतनः प्राणीः अस्मिन् प्रदेशे सञ्चारं कुर्वन् अस्ति" इति। चन्द्रवर्मा तेषां सम्भाषणं श्रुत्वा मनसि एव हसन् अग्रे गतवान्।

दिनस्य तृतीयः प्रहरः। चन्द्रवर्मा उत्तर-दिशम् अनुसरन् आसीत्। सः सर्वथा श्रान्तः। बुभुक्षा पिपासा च तं तीव्रं बाधते। अतः सः समीपे स्थितस्य कस्यचित् वृक्षस्य अधः उपविश्य चतसृषु दिक्षु दृष्टिं प्रसारितवान्। कस्मिन् अपि वृक्षे फलानि न दृष्टानि। कन्दमूलादीनि अपि न दृश्यन्ते स्म।

चन्द्रवर्मा चिन्तितवान्- 'अत्र समययापनेन किमपि प्रयोजनं नास्ति। अग्रे कुत्रापि फलिताः वृक्षाः दृश्येरन्' इति। अनन्तरं सः मन्दं ततः प्रस्थितः।

किञ्चित् दूरम् अग्रे गतवान्। तदा दूरतः फलैः पूर्णाः वृक्षाः तेन दृष्टाः। रसपूर्णानि विविधानि फलानि ! चन्द्रवर्मा उत्साहेन अग्रे धावितवान्। यथा यथा वृक्षाणां समीपम् आगतवान् तथा तथा उष्णवायोः स्पर्शः तेन अनुभूतः।

आश्चर्यचकितः सः इतोऽपि किञ्चित् अग्रे गतवान्। तदा सः दृष्टवान् यत् समीपे एव काचित् नदी प्रवहति। नदीजले अग्निज्वाला दृश्यते।

विचित्राम् एतां नदीं दृष्ट्वा चन्द्रवर्मा क्षणकालं तत्रैव स्थितवान्। "समीपे एव अग्निपर्वतः स्यात्। ततः एषा नदी उत्पन्ना भवेत्। अतः एव अत्युष्णः जलप्रवाहः अत्र दृश्यते। फलपूर्णाः वृक्षाः तु नद्याः अपरपार्श्वे सन्ति। यदि प्राणाः रक्षणीयाः तर्हि केनापि उपायेन नद्याः अपरतीरं प्राप्तव्यम् एव" इति चिन्तितवान् सः।

'अग्रे किं करणीयम् ?' इति चिन्तयन् आसीत् चन्द्रवर्मा। तदा कुतश्चित् आगतः दीर्घाकारकः सर्पः फूत्कारं कुर्वन् तीरं प्राप्तवान्। फणाम् उन्नीय वेगेन शरीरं नोदितवान् येन अग्रभागः अपरतीरं प्राप्नोत्। सः महाकारः सर्पः अल्पे एव काले समतोलतां प्राप्य शिरोबलेन पुच्छभागम् अग्रे नयति स्म।

तत्समये द्वित्राः वानराः वृक्षात् अवतीर्णाः। नद्याः उपरि रज्जुनिर्मितः सेतुः इव स्थितस्य सर्पस्य उपरि धावन्तः अपरतीरं प्राप्तुम् उद्युक्ताः च।

चन्द्रवर्मणः बुद्धिः कार्यप्रवृत्ता। 'यदि नद्याः अपरतीरं प्राप्तव्यं तर्हि वानरैः इव मया अपि सर्पस्य उपरि गन्तव्यम्' इति चिन्तितवान् चन्द्रवर्मा। किन्तु सर्पः यावत् स्वशरीरम् पूर्णतया न आकर्षति ततः पूर्वम् एव अपरपार्श्वं प्राप्तव्यम् आसीत् तेन।

अतः सः धावन् सर्पसमीपं गतवान्। वेगेन उत्प्लुत्य सर्पस्य पृष्ठस्य उपरि गच्छन् वानरान् अनुसृतवान् च। (अनुवर्तते)






# मन्त्रशक्तिः

आत्मनः कथाप्रौढिमविषये गर्वम् अनुभवन् वेतालः वृक्षस्य शाखाम् अवलम्ब्य स्थितवान् आसीत्। तदा यथापूर्वम् तत्र आगतः त्रिविक्रमः शवं वृक्षतः अवतार्य स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितः। तदा शवान्तर्गतः वेतालः अवदत्- "अये महाराज ! अस्मिन् अर्धरात्रे सुखकरे हंसतूलिकातल्पे भवता शयनं करणीयम् आसीत् वस्तुतः। किन्तु एतत्सर्वं त्यक्त्वा कस्य उपकारार्थं भवान् एवम् अटति इति अहं तु न जानामि। सामान्यतः राजानः स्वार्थपराः। स्वार्थसाधनार्थं ते उपकृतस्य विषये अपि द्रोहम् आचरन्ति। स्वार्थसाधनार्थं यत्किमपि कर्तुं सिद्धाः ते। भवान् अपि स्वार्थं साधयितुम् इच्छन् एवम् आचरति वा? एतादृशः कश्चन राजा पूर्वम् आसीत्। तस्य कथां वदामि। शृणोतु तावत्। एतेन मार्गा-

## वेतालकथा



यासः अपि परिहृतः भवेत्'' इति ।

अनन्तरं वेतालः कथाम् आरब्धवान्- ''पूर्वं शम्बरः नाम मान्त्रिकः आसीत् । सः प्रतिदिनं सूर्योदयसमये नद्यां स्नानं कृत्वा शुचिर्भूतः नदीतीरे स्थितस्य वृक्षस्य अधः उपविश्य पूजां करोति स्म । एवम् एकदा सः पूजां समाप्य गच्छन् आसीत् । तदा कश्चित् तत्र आगतवान् । तदीयेन वेषभूषणेन ज्ञायते स्म यत् सः कश्चित् महामान्त्रिकः'' इति ।

शम्बरः तस्य मुखम् आश्चर्येण तदेकदृष्ट्या दृष्टवान् । तदा सः मन्दहासं प्रकटयन् ''अत्र शम्बरः नाम मन्त्रशास्त्रज्ञः अस्ति इति श्रुतम् । सः भवान् एव वा?'' इति पृष्टवान् ।

तदा शम्बरः कोपं प्रकटयन् उक्तवान्- ''न केवलम् अहं मन्त्रशास्त्रं जानामि, अपि तु तत् आपोशनेन पीतवान् । एतं विषयम् अस्मिन् राज्ये सर्वे जानन्ति?'' इति ।

''एवं वा? अहं पार्श्वराज्ये निवसामि । मम मन्त्रशक्तेः सामर्थ्यं मम राज्ये सर्वे जानन्ति । मम नाम देवेशः'' इति उक्तवान् सः आगन्तुकः ।

''समानशक्तियुतयोः द्वयोः मान्त्रिकयोः एकत्र एककाले स्थितिः अशक्या एव'' इति उक्तवान् शम्बरः ।

''एतत् तु सत्यम् । समानबलस्य अन्यस्य स्थितिम् अहम् अपि न इच्छामि । तर्हि प्रमाणीकरोतु भवतः सामर्थ्यम्'' इति उक्तवान् देवेशः ।

''किमिति प्रमाणीकरोमि? यदि अहम् इच्छामि तर्हि समग्रे देशे जलकणम् अपि यथा न स्यात् तथा कर्तुं शक्नोमि'' इति दृढस्वरेण उक्तवान् शम्बरः ।

''अपरक्षणे एव अहं जलप्रवाहम् एव उत्पादयितुं शक्नोमि'' इति उक्तवान् देवेशः ।

एतेन शम्बरः कुपितः अभवत् । सः कोपेन कम्पमानः उक्तवान्- ''मां किं सामान्यं मन्यते वा? यत्र तृणानि अपि न उत्पद्यन्ते तं प्रदेशं हरिद्वर्णेन शोभायमानं कर्तुं शक्नोमि'' इति ।

''एतावदेव वा? तत्प्रदेशम् अहं क्षण-

मात्रेण भस्मीकरोमि।"

तदा शम्बरः खेदेन उक्तवान्- "एवं व्यर्थविवादः किमर्थम्? मम शक्तिविषये भवतः विश्वासः यथा भवेत् तथा कर्तुं मया किं करणीयम् इति वदतु। एतत्क्षणे एव तत् कृत्वा मम शक्तिं निरूपयामि" इति।

देवेशः शान्तस्वरेण उक्तवान्- "यदि भवान् वस्तुतः महामान्त्रिकः तर्हि दीर्घरोगेण पीडितान् रोगविमुक्तान् करोतु। शक्यते वा एतत्?"

"अथ किम्? एतत्क्षणे एव कर्तुं समर्थः।"

"जलप्रवाहं स्रष्टुं शक्नोति वा?"

"एतत् तु सुलभसाध्यं मम!"

"मानवेषु कः विश्वासद्रोही, कश्च बुद्धिमान् विश्वासपात्रं च इति मन्त्रशक्त्या ज्ञात्वा वक्तुं शक्नोति वा?"

"एतत् किं कष्टकरं वा? क्षणमात्रेण एतत् करोमि।"

"पुरतः विद्यमानस्य मनसि यत् अस्ति तत् ज्ञात्वा वक्तुं भवतः शक्तिः अस्ति वा?"

"भवता पृच्छ्यमानं सर्वं कर्तुं समर्थः अहम्। किम् अधिकप्रलापेन? मां सर्वं पृच्छन् भवान् किम् एतत् सर्वं कर्तुं शक्नोति? तावती मन्त्रशक्तिः अस्ति वा भवतः? अथवा केवलं मां पृच्छति वा?" इति कोपेन पृष्टवान् शम्बरः।



"अवश्यं कर्तुं शक्नोमि"

"केवलं कथनेन किं प्रयोजनम्? पणं निश्चेतुं सिद्धः वा?"

"कः पणः? भवान् एव वदतु"

"भवान् एव वदतु नाम। भवान् यत् वदति तत् अहम् अङ्गीकरोमि।"

देवेशः क्षणमात्रम् आलोच्य उक्तवान्- "यः पराजयं प्राप्नोति सः जितवतः दास्यम् अङ्गीकुर्यात्, अनन्तरकाले मन्त्रतन्त्रप्रयोगम् एव त्यजेत्" इति।

"अस्तु नाम, भवान् यथा वदति तथैव भवतु" इति अङ्गीकृतवान् शम्बरः।

"अन्यः कश्चन लघुनियमः यत् भवता एव प्रथमं स्वमन्त्रशक्तिप्रयोगः प्रदर्शनीयः।

अनन्तरम् एव अहं मम मन्त्रशक्तिसामर्थ्यं प्रदर्शयामि'' इति उक्तवान् देवेशः। शम्बरः एतत् अपि अङ्गीकृतवान्।

अनन्तरम् उभौ अपि मान्त्रिकौ ततः प्रस्थाय मध्याह्नसमये कञ्चित् ग्रामं प्राप्तवन्तौ। तत्र बहोः कालात् वृष्टिः न आसीत् इति कारणतः क्षेत्राणि शुष्काणि आसन्। कूप-सरोवरादिषु जलस्य नाम अपि न आसीत्। पानजलस्य अपि अभावात् जनाः व्याकुलिताः आसन्।

''भोः अस्मिन् प्रदेशे भवतः मन्त्रशक्ति-बलेन वृष्टिम् आनयतु'' इति उक्तवान् देवेशः।

शम्बरः क्षणकालं ध्यानमग्नः अभवत्। अनन्तरं कमपि मन्त्रं जपन् दक्षिणहस्तेन वायौ एव काश्चन मुद्राः लिखितवान्। अङ्गुलीभिः नेत्रयोः स्पर्शं कृतवान् च। तेन अपरक्षणे एव परितः नीलमेघाः उत्पन्नाः। स्तनितानि उच्चैः श्रुतानि। बिन्दुरूपेण आरब्धा वृष्टिः धाराकारताम् आपन्ना।

विजयगर्वेण शिरः चालयन् देवेशं दृष्टवान् शम्बरः। देवेशः सन्तोषं प्रकटयन् हसन् उक्तवान्- ''भवतः विषये मया अन्यथा चिन्तितम् आसीत्। चिन्ता नास्ति, भवान् मन्त्रशक्तिं किञ्चित् जानाति इति तु इदानीं सिद्धम्'' इति।

''किम् उक्तवान्? मन्त्रशक्तिं किञ्चित् जानाति इति? इतोऽपि अधिकां शक्तिशालिनीं



भवतः मन्त्रशक्तिं प्रदर्शयतु तर्हि'' इति शम्बरः कोपेन उक्तवान्।

''शान्तः भवतु। नियमं स्मरति किल भवान्? भवतः मन्त्रशक्तिः पूर्णतया प्रथमं प्रदर्शनीया इति नियमः भवता एव अङ्गीकृतः'' इति मन्दहासेन उक्तवान् देवेशः।

''तर्हि इदानीं किं करणीयम्?'' इति पृष्टवान् शम्बरः।

''इदानीं राजधानीं गच्छावः। अस्य देशस्य महाराजस्य पुत्री दीर्घकालिकरोगेण पीडिता अस्ति। मन्त्रशक्त्या भवान् तस्याः रोगं निवार्य भवतः सामर्थ्यं निरूपयतु'' इति उक्तवान् देवेशः।

अनन्तरम् उभौ अपि राजधानीं गत्वा महाराजं दृष्टवन्तौ। महाराजः तयोः आगमन-कारणं ज्ञात्वा तौ राजकुमारीसमीपं नीतवान्। शम्बरः राजकुमार्याः मञ्चस्य पार्श्वे स्थित्वा अङ्गुलीभिः वायौ मुद्राः लिखन् मन्त्रजपं कृतवान्। बहुकालपर्यन्तं सः एवम् एव कुर्वन् आसीत्।

किञ्चित्कालानन्तरं राजकुमारी पार्श्वपरि-वर्तनं कुर्वती मन्दहासं प्रकटयन्ती च शयनात् उत्थितवती। 'समर्थाः वैद्याः अपि यं रोगं निवारयितुम् असमर्थाः आसन्, स च रोगः क्षणमात्रेण निवृत्तः' इति ज्ञात्वा राजा बहु सन्तुष्टः।

''साधु, मान्त्रिक! साधु! भवान् असाधारणः





देवेशः उक्तवान्- "मित्र ! पूर्वं मया उपस्थापितासु परीक्षासु भवान् उत्तीर्णः। इतः परम् अन्तिमा परीक्षा। एषा बाह्यसम्बन्धिनी न। अपि तु मम सम्बन्धिनी एव। मम मनसि किम् अस्ति इति भवान् वक्तुं शक्नोति वा ?" इति।

शम्बरः नेत्रे निमील्य अङ्गुल्या वायौ मुद्रां लिखित्वा नेत्रं स्पृशन् कोपेन पृष्टवान्- "अये, कीदृशः वञ्चकः भवान् ! 'शम्बरेण मया सत्यम् उक्तं चेत् तत् निराकरणीयम्, तेन च अहं पराजितः भवेयम्' इति भवान् चिन्तयति किल ? मम मन्त्रशक्तिं निन्दयितुम् इच्छति भवान्। कीदृशी दुष्टा आलोचना भवतः ?" इति।

पुरुषः" इति उक्तवान् महाराजः।

देवेशः महाराजेन सह एकान्ते वार्तालापं कृत्वा शम्बरसमीपम् आगत्य उक्तवान्- "स्वपरिवारे केचन विश्वासद्रोहिणः सन्ति इति महाराजस्य सन्देहः अस्ति। ते के इति भवान् स्वमन्त्रशक्त्या जानातु तावत" इति।

शम्बरः राजपरिवारीयान् स्वसमीपम् आगन्तुम् उक्तवान्। सर्वान् सम्यक् एकवारं परिशील्य नेत्रे निमीलितवान्। अनन्तरम् द्रोहिणः एकैकशः प्रदर्शितवान्। देवेशस्य सूचनानुसारं महाराजः तेषां बन्धनार्थम् आज्ञापितवान्, तान् कारागारे स्थापितवान् च।

अनन्तरं शम्बरेण सह राजसभां गच्छन्

एतत् श्रुत्वा देवेशः आश्चर्यचकितः अभवत्। तदा कोपोद्रिक्तः शम्बरः पुनः गर्जितवान्- "रे दुष्ट ! भवान् कः इत्यपि मया ज्ञातम्। भवतः कापि मन्त्रशक्तिः नास्ति। भवान् न मन्त्रिकः, भवतः नाम देवेशः इत्यपि न। भवान् अस्य देशस्य मन्त्री देवदत्तः। मत्तः लाभं प्राप्तुं, चिरात् अनुवर्तमानं राजकुमार्याः रोगं निवारयितुं च भवान् माम् एवं व्याजेन अत्र आनीतवान्। महावञ्चकः भवान्। अस्मिन् क्षणे एव अहं भवन्तं यमसदनं प्रेषयामि" इति।

अपरक्षणे एव महाराजस्य सूचनानुसारं

भटाः शम्बरस्य उपरि आक्रमणं कृतवन्तः। दृढया शृङ्खलया तस्य हस्तपादं बद्धवन्तः। वस्त्रेण मुखपिधानं कृतवन्तः च।

"एतम् एतत्क्षणे एव वधास्थानं नीत्वा एतस्य शिरश्छेदं कुर्वन्तु" इति राजा कठोरम् आज्ञापितवान्। भटाः तं ततः नीतवन्तः। राजाज्ञां पालितवन्तः च।

वेतालः एवं कथां समाप्य अवदत्- "राजन्! शम्बरस्य शिरश्छेदं राजा यत् आज्ञापितवान् तत् अनुचितम् एव किल? केनापि औषधेन यस्य निवारणं न शक्तम् आसीत् तादृशं राजकुमार्याः रोगं सः निवारितवान्। क्षामादिकम् अपि निवारितवान्। अन्यच्च शम्बरस्य कोपः मन्त्रिणः देवदत्तस्य उपरि, न तु महाराजस्य उपरि। एवं स्थिते महाराजः किमर्थं शम्बरं तावत् कठोरतया दण्डितवान्? वस्तुतः शम्बरस्य सम्माननं करणीयम् आसीत् किल महाराजेन? किं महाराजस्य कार्याकार्यविवेकः नास्ति? एतेषां सन्देहानाम् उत्तरं जानन् अपि यदि भवान् न वदति तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा त्रिविक्रमः उक्तवान्- "यथा कश्चित् स्वकुटुम्बस्य पोषणं करोति तथैव महाराजेन स्वप्रजानां पालनं करणीयम्। एतत् महाराजस्य कर्तव्यम्। शम्बरस्य मन्त्रशक्तिः असाधारणी इति तु प्रयोगसिद्धम्। शम्बरः स्वशक्तिं जनानां उपकारार्थं अहितार्थं वा प्रयोक्तुं शक्नोति। मन्त्रिणः विषये इदानीं शम्बरस्य द्वेषः अस्ति। यः मन्त्रिणः द्वेषं करोति सः राजानम् अपि कालान्तरे पीडयेत् एव। तत्रापि शम्बरस्य स्वभावः क्रूरः। यदाकदापि सः अपायकरः एव। अतः महाराजः तस्य शिरश्छेदं कारितवान्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः शव-सहितम् अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान्।



# ऐश्वर्यरहस्यम्

रामपुरे रामचन्द्रः कश्चन धनिकः। रिक्तहस्तेन सः तं ग्रामं प्रविष्टवान् आसीत्। आगमनानन्तरम् एकवर्षाभ्यन्तरे भूमिं सम्पादितवान् आसीत् सः। पुनश्च पञ्चवर्षाभ्यन्तरे धनिकपङ्क्तौ स्थानं प्राप्तवान् च।

रामचन्द्रः अल्पे अवधौ कथं धनिकः जातः? इति तद्ग्रामीणः शरभः बहुचिन्तनानन्तरम् अपि न ज्ञातवान्। 'कथञ्चित् एतत् रहस्यं ज्ञातव्यम् एव' इति चिन्तयन् सः एकदा सायङ्काले रामचन्द्रस्य गृहं गतवान्।

तदा रामचन्द्रः एकं दीपं प्रज्वाल्य प्रकोष्ठे मध्ये स्थापयन् आसीत्। शरभं दृष्ट्वा सन्तोषं प्रकटयन् रामचन्द्रः आदरपूर्वकम् उक्तवान्- "विशेषकारणेन आगतवान् इति भाति" इति।

"तथा किमपि नास्ति" इति उक्त्वा शरभः स्वकीयसन्देहं पृष्टवान्- "आवां समानग्रामीणौ स्नेहितौ च किल? किमर्थं रहस्यं मह्यं न निवेदयति भवान्?" इति।

"अत्र किं रहस्यम्?" इति वदन् रामचन्द्रः एकं लघुकटं भूमौ प्रसार्य शरभं तत्र उपवेशितवान्। अन्तः गत्वा दीपं निर्वाप्य बहिः आगतवान्। शरभस्य पार्श्वे उपविश्य- 'इदानीं वार्तालापं कुर्मः' इति उक्तवान् च।

शरभः आश्चर्येण- "इदानीं आगमनसमये दीपं किमर्थं निर्वापितवान् इति अहं न ज्ञातवान्। प्रथमं तस्य कारणं वदतु" इति उक्तवान्।

रामचन्द्रः सहजस्वरेण- "सुखम् उपविश्य वार्तालापार्थं दीपः किमर्थम्? दीपः ज्वलति चेत् वृथा तैलव्ययः। अनपेक्षितव्ययः किमर्थं करणीयः?" इति पृष्टवान्।

एतत् श्रुत्वा शरभः झटिति उत्थाय- "ज्ञातवान् अहम्। अस्तु, पुनः मिलामः" इति उक्त्वा ततः प्रस्थितः।

"किमपि रहस्यं ज्ञातव्यम् इति पृष्टवान् किल?" इति पृष्टवान् रामचन्द्रः।

"भवत्कथनतः पूर्वम् एव भवतः व्यवहारेण तत् रहस्यम् अहं ज्ञातवान्" इति वदन् शरभः स्वगृहं गतवान् एव।





# पीडापरिहारः

गोवर्धनः कश्चित् विद्यावान् युवकः । सः नगरस्थिते सर्वकारकार्यालये उद्योगं प्राप्तवान् । गोवर्धनः अतीव सङ्कोचस्वभाववान् । अल्पे एव काले तस्य विवाहः सम्पन्नः । विवाहानन्तरं शीघ्रम् एव सः स्वपत्नीं नगरम् आनीतवान् । अत्र विचित्रं आसीत् यत् तस्य पत्नी सुनन्दा अपि सङ्कोचशीला एव ।

सुनन्दायाः आगमनदिवसे एव कुटुम्बव्यवहारे तयोः परस्परसङ्कोचस्वभावः प्रकटितः । पाकविषये विचारविनिमयं कर्तुम् अपि तयोः महान् सङ्कोचः । गोवर्धनः आकाशं पश्यन् पत्नीम् पृष्टवान् "एतस्मिन् नूतनपरिसरे पाकं कर्तुं भवत्याः कष्टं भवेत् । अतः भोजनालयतः आनयनम् उचितम् इति प्रतिभाति । किं द्वित्रदिनानि तथा करोमि वा ?" इति ।

पाकं कर्तुम् एतानि वस्तूनि अपेक्षितानि इति पतिं वक्तुम् अपि सुनन्दायाः सङ्कोचः । सा मन्दस्वरेण "कीदृशं भोजनं भवते रोचते इति वदतु । तदर्थम् आवश्यकवस्तूनि अपि आनयतु । अहं पाककार्यं सम्यक् जानामि । तत्र किमपि कष्टं नास्ति" इति उक्तवती ।

एवंरीत्या आरब्धं तयोः कुटुम्बजीवनं यथाकथञ्चित् प्रचलति स्म । कदाचित् तया कृतं कार्यं गोवर्धनाय न रोचते । तथापि सः तूष्णीं तिष्ठति । सा अपि तथैव । कालः गच्छति स्म ।

एकस्मिन् सायङ्काले तौ शिवदेवालयं गत्वा शिवदर्शनानन्तरं पुनः प्रत्यागच्छतः स्म । तदा मार्गमध्ये गच्छन्, चलितुम् अपि अशक्तः एकः वृद्धः गोवर्धनं दृष्ट्वा कम्पमानेन स्वरेण "भोः महाशय, चलितुम् अपि अशक्तः अस्मि । कृपया साहाय्यं करोति वा ? भवतः कल्याणं भविष्यति" इति उक्तवान् ।

गोवर्धनः आर्द्रहृदयः सन्, तस्य वृद्धस्य

"श्रीमाता"



हस्तं गृहीत्वा तं चालयन् अग्रे प्रस्थितवान्। तदा मार्गे गच्छन्तः केचन धनिकाः गोवर्धनं दृष्ट्वा क्रोधेन "किं भोः, विद्यावान् इव दृश्यते। एतावत् अज्ञानं वा? वृद्धस्य पितुः विषये सदाचरणम् अपि न जानाति वा?" इति भर्त्सयन्तः तत्रैव गच्छन्तम् एकं भाटक-शकटम् आहूतवन्तः।

'एषः वृद्धः मम जनकः न' इति वक्तुम् अपि सङ्कोचः गोवर्धनं बाधते। किङ्कर्तव्यता-मूढः सः पत्न्याः मुखं दृष्ट्वा अलोचयन् आसीत्। तदा शकटचालकः वृद्धम् आरोप्य "किं चिन्त्यते भोः? शीघ्रं शकटम् आरुह्य कुत्र गन्तव्यम् इति वदतु" इति शकटं चालयितुं प्रवृत्तः। किमपि वक्तुम् अशक्तः गोवर्धनः शकटे उपविष्टवान्। सुनन्दा तम् अनुसृतवती।

यदा तौ गृहं प्राप्तवन्तौ, तदा वृद्धस्य शरीरं ज्वरेण तप्तम् आसीत्। सः केवलं हुँ-हुँ इति ज्वरतापं प्रकटयन् अन्यत् किमपि नैव उक्तवान्। शकटचालकः वृद्धम् आनीय गृहस्य पुरतः वेदिकायां शाययित्वा, भाटकं गृहीत्वा ततः निर्गतवान्।

सुनन्दा वृद्धस्य शयनार्थं शय्यां सज्जीकृतवती। गोवर्धनः शीघ्रं गत्वा वैद्यम् आनीतवान्।

पञ्चषदिनानन्तरं वृद्धः पूर्णरूपेण स्वस्थः जातः। किन्तु तदनन्तरम् अपि वृद्धः गमनप्रस्तावं न कृतवान् एव।

पुनः दिनचतुष्टयम् अतीतम्। गोवर्धनः पत्नीम् "एषः वृद्धः कदा वा निर्गच्छेत्?" इति पृष्टवान्।

"तम् एव पृच्छावः। तदा किमपि वदेत्" इति सुनन्दा उत्तरितवती।

"श्वः भोजनानन्तरं भवती एव पृच्छतु" इति उक्तवान् गोवर्धनः।

'तथा प्रष्टुम् अहं न शक्नोमि' इति पतिं वक्तुम् अपि सुनन्दायाः सङ्कोचः। अतः सा तूष्णीं स्थितवती।

एवमेव पुनः दिनद्वयम् अतीतम्। अन्ते गोवर्धनः मनः दृढं कृत्वा वृद्धं उक्तवान् "श्वः प्रातः अहं सुनन्दा च तस्याः मातृगृहं

गमिष्यावः। प्रत्यागमनं तु दिनद्वयानन्तरम् एव'' इति।

''सन्तोषेण गच्छताम् भोः। भवतोः प्रत्यागमनपर्यन्तं मम भोजनादिविषये चिन्ता मास्तु। तदर्थम् अहं व्यवस्थां करोमि। यदि प्रत्यागन्तुं विलम्बः भवति, भवतु नाम'' इति उक्तवान् वृद्धः निश्चिन्तभावेन।

वृद्धस्य वचनं श्रुत्वा गोवर्धनः पूर्वापेक्षया अधिकं चिन्ताव्यग्रः अभवत्। परेद्युः गत्यन्तराभावात् पत्न्या सह गृहतः प्रस्थाय नगरस्य एकस्मिन् कोणे, धर्मशालायां दिनद्वयं यावत् रहस्यरूपेण वासं कृत्वा, अनन्तरं गृहं प्रत्यागतवान्। एतेन उपायेन धनस्य दुर्व्ययः जातः, तावदेव। एतस्मात् वृद्धात् कथं विमोचनम्? इति पतिः पत्नी च नितरां चिन्ताक्रान्तौ जातौ।

एका रात्रिः। यथाक्रमं पतिपत्न्योः सम्भाषणविषयः वृद्धस्य विचारः एव आसीत्। तदा अन्यप्रकोष्ठे सुप्तः वृद्धः उत्थाय तयोः समीपम् आगत्य ''भोः, सर्वदा मम विषये भवतोः असत्यम् अयुक्तं च वार्तालापः प्रचलति। एतेन मम अपि निद्राहानिः, भवतोः अपि। एतत् गृहं त्यक्त्वा अहं कुत्रापि न गमिष्यामि। भवन्तौ माम् उज्जीवितवन्तौ। अतः इदानीं मम पोषणदायित्वम् अपि भवतोः एव। यदि न शक्यते, तर्हि उच्यताम्।



इदानीम् एव गत्वा गृहस्य पृष्ठभागे स्थिते कूपे पतिष्यामि'' इति उक्त्वा पुनः स्वस्थानं गत्वा सुप्तवान्।

वृद्धस्य मरणं यावत् तस्य पोषणभारः आवयोः शिरसि एव पतितः इति तौ निश्चितवन्तौ।

अनन्तरं एकदा प्रातः गोवर्धनः भोजनं समाप्य कार्यालयं गतवान्। तदनन्तरम् अकस्मात् सुनन्दायाः एका बाल्यसखी आगतवती। नन्दिनी इति तस्याः नाम। सुनन्दायाः विवाहदिने एव नन्दिन्याः भ्रातुः विवाहः आसीत्। अतः सुनन्दायाः विवाहसमये नन्दिनी न आगतवती। अतः इदानीं नन्दिनी सुनन्दायाः नूतनजीवनं द्रष्टुम् आगतवती।



दर्शनेन मम वमनशङ्का" इति रटन् यथाकथञ्चित् भोजनं समाप्य गत्वा पुनः स्वस्थाने शयितवान् ।

एतत्सर्वं दृष्ट्वा नन्दिनी सुनन्दां पृष्टवती- "भवत्याः श्वशुरः अतीव कोपशीलः इति भाति । किम् भवत्याः पतिः अपि एतादृशः एव वा ?" इति ।

"एषः वृद्धः न मम श्वशुरः, न वा कश्चित् अन्यः बन्धुः । मार्गे गच्छन् पिशाचः आगत्य अस्माकं शिरसि उपविष्टवान् अस्ति" इति आरभ्य सुनन्दा प्रवृत्तं वृत्तान्तं सविस्तरं नन्दिन्यै निवेदितवती ।

नन्दिनी तु आश्चर्येण "कथा एवम् अस्ति वा ! भवतोः सङ्कोचस्वभावस्य परिणामः एषः इति मन्ये" इति उक्तवती ।

"किं वा करोमि भोः ? इतः निर्गच्छतु इति उच्चैः वदामः चेत्, 'भवताम् एव कूपे पतामि' इति वदति । यदि तथा एव करोति, तर्हि जनानां मध्ये अस्माकं गौरवस्य का वा गतिः स्यात् ?" इति उक्तवती सुनन्दा ।

"भवतोः वृथा श्रमः । एवं कूपे पतामि इति यः भाययति तस्य वस्तुतः मरणात् महत् भयं वर्तते । इदानीं पश्यतु, अहं क्षणमात्रेण तं वृद्धम् इतः निष्कासयामि । मम सर्वेषां वचनानां उत्तररूपेण भवती केवलम् 'अस्तु अस्तु' इति वदतु" इति उक्तवती नन्दिनी ।

नन्दिनीं दृष्ट्वा सुनन्दायाः महान् सन्तोषः जातः ।

सा सख्या सह वार्तालापं कुर्वती किञ्चित्कालं यापितवती । तदा वृद्धः तयोः समीपम् आगत्य, सुनन्दां प्रति "किम् एतस्य व्यर्थजल्पनस्य अन्त्यम् एव नास्ति वा ? अत्र मम उपस्थितिः अपि विस्मृता वा ? किम् भोजनं परिवेषयति, उत एवमेव मां मारयति ?" इति रोषेण गर्जितवान् ।

सुनन्दा किमपि अनुक्त्वा, उत्थाय गत्वा वृद्धाय भोजनं परिवेषितवती । सः खादितुम् आरभ्य "एतत् अलाबु मह्यं न रोचते इति सहस्रवारं उक्तवान् अस्मि । तथापि पुनः पुनः तदेव आनीय पाकं करोति । एतस्य

अनन्तरं नन्दिनी किञ्चित् शर्करां सम्यक् चूर्णीकृतवती। तत् चूर्णं जले संयोज्य आतपे स्थापितवती। मध्याह्नः अतीतः। आतपः न्यूनः जातः। शीतलः सन्ध्यावायुः हितं वाति स्म। तदा वृद्धः निद्रां समाप्य उपाहारस्य इच्छया पाकगृहं प्रति प्रस्थितः। तदा पाकगृहे सुनन्दया सह उपविष्टवती नन्दिनी वृद्धम् अपश्यन्ती इव मन्दस्वरेण "पश्यतु सुनन्दे, मरणापन्नः वृद्धः भवद्भ्यां रक्षितः किल? अतः तस्य पोषणदायित्वम् अपि भवतोः एव इति तु सत्यम्। किन्तु तदर्थं भवतोः आवश्यकं सामर्थ्यं नास्ति। अतः इदानीं तस्य मरणं एव उचितम्। किन्तु सः यथा वेदनां विना मरणं प्राप्नुयात्, तथा उपायः करणीयः" इति उक्तवती।

"सत्यम् सत्यम्" इति उक्तवती सुनन्दा।

"अङ्गीकरोति किल? मत्समीपे एकं विषम् अस्ति। अस्य विषस्य अल्पः भागः अपि मरणाय पर्याप्तम्। यस्मिन् कस्मिंश्चित् खाद्यपदार्थे एतत् योजयतु। किञ्चित् अपि रुचिभेदः न ज्ञायते। सप्ताहावधौ सः स्वीयपापपुण्यानां योग्यं नरकं वा स्वर्गं वा प्राप्स्यति। विषप्रयोगः कृतः अस्ति इति परीक्ष्य वक्तुं धन्वन्तरिसदृशः वैद्यः अपि न शक्नोति। स्वयं वृद्धः अपि किमपि क्लेशं न अनुभवति। सलीलं मरणं प्राप्नोति" इति उक्त्वा नन्दिनी पूर्वमेव सज्जीकृतं शर्कराचूर्णं सुनन्दायै दत्तवती।



वृद्धः भित्तेः अन्यस्मिन् पार्श्वे स्थित्वा नन्दिन्याः वचनानि सर्वाणि श्रुतवान्। भीतस्य तस्य शरीरे कम्पनम् उत्पन्नम्। सः झटिति प्रतिनिवृत्य स्वीयवस्त्रादिकं सङ्गृह्य पुनः सुनन्दायाः समीपम् आगत्य "भोः सुनन्दे, अहं अकस्मात् गच्छन् अस्मि। किन्तु एतद्विषये चिन्ता मास्तु। अस्यां वृद्धावस्थायां वृथा कालहरणापेक्षया पुण्यक्षेत्राणां यात्रा उचिता इति मम स्वप्ने काचन देवता आगत्य जागरितवती। उत्तमकार्याणि सर्वदा झटिति एव करणीयानि। अतः इदानीं एव प्रस्थितः" इति उक्तवान्।

"किमर्थम् एतावती त्वरा ? पत्युः आगमनं यावत् तिष्ठतु। उपाहारं ददामि" इति यदा सुनन्दाः उक्तवती, तदा वृद्धस्य शरीरे पूर्वापेक्षया अधिकं कम्पनं जातम्।

"मास्तु अम्ब, मध्याह्नस्य भोजनम् एव न जीर्णम्। एतं विचारं भवत्याः पतिं भवती एव वदतु" इति वदन् एव सः वृद्धः गृहं त्यक्त्वा मार्गं प्रविष्टः।

सायङ्काले गोवर्धनः कार्यालयतः गृहं यदा आगतवान्, तदा सुनन्दया उक्तं सर्वं वृत्तान्तं श्रुतवान्। अन्ते सुनन्दा "भाग्यवशात् नन्दिन्याः साहाय्येन पीडायाः परिहारः जातः" इति उक्तवती।

गोवर्धनः नन्दिनीं दृष्ट्वा किमपि वक्तुं प्रवृत्तः। तदा नन्दिनी एव एवम् उक्तवती "प्रप्रथमतया भवद्भ्यां सङ्कोचरूप-पीडा नाशनीया। परोपकारस्वभावः अतीव समीचीनः गुणः इति तु सत्यम्। परोपकार-गुणेन हीनाः, मनुष्याः इति न उच्यन्ते। किन्तु औचित्यापेक्षया अधिकः परोपकारः अतीव हानिकरः" इति।

"इदानीम् आवाभ्यां स्वानुभवेन एव एषः विचारः ज्ञातः किल ?" इति गोवर्धनः पत्न्याः मुखं पश्यन् उक्तवान्।

सुनन्दा मन्दहासं प्रकटयन्ती स्वीयं अङ्गीकारं सूचितवती।





# प्राणिबलिः

ब्रह्मदत्तः काशीराज्यं पालयति स्म। तदा बोधिसत्त्वः ब्रह्मदत्तस्य पुत्ररूपेण जन्म गृहितवान्। ब्रह्मदत्तकुमारः इत्येव तस्य नामधेयं कृतम्। सः कुमारः शैशवम् अतीत्य, विद्यार्जनार्थं तक्षशिलां गतवान्। तत्र श्रद्धया अध्ययनं कुर्वन् षोडशे वयसि सः वेदवेदाङ्गेषु शास्त्रेषु उपनिषदादिषु च पण्डितः जातः।

एवंरीत्या विद्याभ्यासं समाप्य यदा सः राजधानीं समागतवान्, तदा पिता तस्य युवराजपट्टाभिषेकं कृतवान्।

तस्मिन् समये काशीराज्यस्य जनाः अन्धविश्वासेन ग्रस्ताः आसन्। तत्र विभिन्नक्षुद्रदेवतानां पूजा प्रचलति स्म। सर्वत्र महोत्सवसमये देवतानां पुरतः मेषानाम्, अजानां, कुक्कुटानां च बलिं यच्छन्ति स्म। तेषां प्राणिनां रक्तं नैवेद्यरूपेण अर्पयन्ति स्म।

प्रजानाम् एतादृशमूर्खताम्, अन्धश्रद्धाम् अज्ञानं हिंस्रकर्माणि च दृष्ट्वा ब्रह्मदत्तकुमारः महत् दुःखम् अनुभूतवान्। सः मनसि एव "यदा अहं राजा भविष्यामि तदा एतान् दुराचारान् नामावशेषं करिष्यामि। मम राज्ये बिन्दुमात्रम् अपि रक्तं न स्रवेत्" इति निर्णीतवान्।

काशीनगरस्य बहिर्भागे एकः वटवृक्षः आसीत्। 'तस्मिन् वृक्षे काचित् देवता अस्ति, तस्याः पूजया इष्टार्थसिद्धिः भविष्यति' इति प्रजासु दृढविश्वासः आसीत्।

एकदा ब्रह्मदत्तकुमारः रथम् आरुह्य नगरबहिर्भागे स्थितस्य वटवृक्षस्य समीपं गतवान्। अनेके पुरुषाः स्त्रियः च तं वृक्षं परितः भक्त्या प्रदक्षिणनमस्कारादिकं कुर्वन्ति स्म। युवराजः वृक्षतः किञ्चिद्दूरे एव रथात् अवतीर्णः। अनन्तरं सः अपि फलपुष्पादिभिः वृक्षस्य पूजां कृत्वा प्रदक्षिणत्रयं कृतवान्।

"जातककथा"

पूजानन्तरं पुनः रथम् आरुह्य नगरं प्रत्यागतवान्। तदनन्तरं सः तदा तदा तस्य वटवृक्षस्य समीपं गत्वा सामान्यजनाः इव प्रदक्षिणादिकं करोति स्म।

किञ्चित्कालानन्तरं वृद्धराजः दिवङ्गतः। ब्रह्मदत्तकुमारः एव काशीराज्यस्य राजा अभवत्।

पट्टाभिषेकस्य अनन्तरं एकां महतीं राजसभां प्रकल्प्य, तस्यां सभायां ब्रह्मदत्तकुमारः एवंरीत्या उक्तवान्- "अहं राजपदवीं कथं प्राप्तवान् इति भवन्तः न जानन्ति। यदा अहं युवराजः आसं, तदा नगरबहिर्भागे विद्यमानस्य वटवृक्षस्य देवतां पूजितवान्। एतं विषयं प्रायः भवन्तः जानन्ति। अहं प्राणिनां सहस्रं बलिरूपेण देवतायै समर्पयामि इति प्रतिज्ञां कृतवान् आसम्। इदानीं मम इष्टार्थसिद्धिः अभवत्। अतः मम प्रतिज्ञानुसारेण वटवृक्षस्य देवतायै बलिः समर्पणीयः" इति।

एतत् श्रुत्वा सभायाम् उपस्थिताः सर्वे अत्यानन्दं प्रकटितवन्तः। सचिवाः "महाराज, वृक्षदेवतायै केषां प्राणिनां बलिः भवता प्रतिज्ञातः? वयं सर्वव्यवस्थां कुर्मः। आज्ञापयतु" इति विज्ञापितवन्तः।

"मया मूकप्राणिनां बलिः न प्रतिज्ञातः। देवताभ्यः मूकप्राणिनां बलिं ये यच्छन्ति तेषां मानवप्राणिनां बलिः प्रतिज्ञातः। तादृशमानवप्राणिनां सहस्रम् आनयन्तु। तदा मम प्रतिज्ञापूर्तिः भविष्यति। अद्य आरभ्य देवताभ्यः ये ये मूकप्राणिनां बलिं यच्छन्ति, ते ते पुण्यजीविनः मानवाः वृक्षदेवतायै बलिरूपेण समर्प्यन्ते इति राज्ये सर्वत्र उद्घोषयन्तु" इति उक्तवान् ब्रह्मदत्तकुमारः। एतत् वचनं श्रुत्वा सर्वे निर्विण्णाः जाताः। तेषां सर्वेषाम् अपि बलिविचारे विश्वासः आसीत्। अतः किमपि वक्तुं ते असमर्थाः जाताः।

राजाज्ञा सर्वत्र उद्घोषिता। तदारभ्य इन्द्रजालेन इव काशीराज्ये कुत्रापि प्राणिबलिः नैव दृष्टः।





अस्माकं नद्यः –

## गङ्गा – १

कदाचित् नारदमुनिः भूलोकतः देवलोकं गच्छति स्म। पूर्णिमाचन्द्रस्य कान्त्या विलसतः हिमालयस्य शिखरेषु सञ्चरन् सः सन्तोषेण वीणां वादयन् गायन् च मन्दं गच्छन् आसीत्।

मार्गे कस्यचित् खातस्य समीपे असाधारणसौन्दर्येण प्रकाशमानान् कांश्चन स्त्रीपुरुषान् सः दृष्टवान्। "एते के भवेयुः" इति आत्मनि एव आश्चर्यम् अनुभवन् सः तेषां समीपं गतवान्।





यदा समीपम् गतं तदा तेन अन्यदपि आश्चर्यं दृष्टं यत् तेषु एकैकः अपि केनचित् अङ्गेन ऊनः इति। एकः नेत्रेण हीनः चेत् अपरः कर्णेन हीनः इति। अन्यः पादविहीनः चेत् पुनरन्यः हस्तविहीनः।







नारदस्य प्रश्नस्य उत्तरं दातुं ते सङ्कोचम् अनुभूतवन्तः। नारदः यदा पुनः पृष्टवान् तदा ते उक्तवन्तः- "वयं गानप्रियाः स्वरात्मानः च गन्धर्वाः। यदा गायकाः अपस्वरेण गायन्ति तेन वयं व्रणिताः भवामः। अवयवहीनाः च भवामः" इति।

लोकोपकारी नारदः एतेन स्वाभाविकतया चिन्तामग्नः अभवत्। 'एतस्य परिहारः कथम्' इति तान् पृष्टवान् सः। तदा ते उक्तवन्तः- "परिपूर्ण गायकः शिवः यदि गायति तर्हि तस्य श्रवणेन अस्माकम् अङ्गविकारः दूरीकृतः भविष्यति" इति। नारदः तत्क्षणे एव कैलासं गत्वा 'गानार्थम् आगन्तव्यम्' इति शिवं प्रार्थितवान्।





नारदस्य प्रार्थनां शिवः अङ्गीकृतवान्। किन्तु एकं नियमम् उक्तवान् यत् मम गायनं श्रोतुम् एकः वा परिपूर्णः श्रोता आवश्यकः इति। ब्रह्मा विष्णुः – एतौ उभौ एव परिपूर्णौ श्रोतारौ इत्यपि शिवः सूचितवान्। नारदः ब्रह्मणः समीपं गत्वा विषयं निवेद्य 'शिवगानस्य श्रवणार्थम् आगन्तव्यम्' इति प्रार्थितवान्।

ब्रह्मा परमसन्तोषेण एतदर्थं सिद्धः अभवत्। 'एतेन सह परिपूर्णः श्रोता अन्यः अपि अस्ति चेत् वरम्' इति चिन्तयन् नारदः वैकुण्ठं गत्वा विष्णुम् अपि आगन्तुम् प्रार्थितवान्। विष्णुः अत्यानन्देन नारदस्य प्रार्थनाम् अङ्गीकृतवान्।





ब्रह्मा विष्णुः गन्धर्वाः च शिवसमीपं आगतवन्तः। शिवः बहुकालपर्यन्तं मौनं स्थित्वा ध्याने मग्नः सन् अनन्तरं सुमधुरं गातुम् आरब्धवान्। एतेन गायनेन सर्वे परवशीकृताः।

शिवगानेन वशीकृताः गन्धर्वाः नाट्ये प्रवृत्ताः। तत्सन्दर्भे लुप्तानि तेषाम् अङ्गानि क्रमशः पुनः उद्भूतानि। सन्तुष्टाः ते कृतज्ञताभावेन शिवं नमस्कृतवन्तः।





शिवगानस्य प्रभावेण प्रकृतौ अद्भुतं परिवर्तनं दृष्टम्। सङ्गीततरङ्गैः चोदिताः वृक्षाः अकस्मात् पुष्पिताः। नवकिसलयैः ते राराजन्ते स्म। सुगन्धपूर्णः मलयमारुतः मन्दं चलति स्म। नवयौवनं प्राप्तवती इव स्थिता प्रकृतिः भूलोकस्य देवलोकस्य च शोभां वर्धयति स्म।

तस्मिन् सन्दर्भे अन्या अपि काचित् घटना प्रवृत्ता। शिवस्य मृदुमधुरगायने लीनस्य विष्णोः शरीरतः कश्चन निर्मोकः निर्गतः। सः उन्मोकः प्रवाहरूपतां प्राप्तः। एतां घटनां ब्रह्मा एकः एव दृष्टवान् आसीत्।






ब्रह्मा तत्क्षणे एव तां जलधारां स्वकमण्डलौ सङ्गृहीतवान्। सा जलधारा एव गङ्गायाः मूलम्। 'विष्णुशरीरतः निर्मोकरूपेण बहिः आगत्य विष्णुपादतः उद्भूता' इति कारणतः एषा गङ्गा परमपवित्रा इति ख्याता अभवत्।

# ज्ञानोदयः

चित्रपुरस्य राजा कीर्तिसेनः। "सद्यः एव अहं मरणं प्राप्स्यामि" इति भीतिः तस्य मनसि कदाचित् अकस्मात् उत्पन्ना।

मन्त्री धर्मसेनः एतं विषयं ज्ञातवान्। अतः सः "समीपे अरण्ये तपः आचरतः ज्ञानानन्दमुनेः दर्शनं प्राप्य आगच्छतु" इति सूचितवान्।

कीर्तिसेनः ज्ञानानन्दस्य आश्रमं गतवान्। तत्र आत्मनः भीतिं निवेद्य पृष्टवान्- "भवन्तः त्रिकालज्ञाः महातपस्विनः। सर्वम् अपि जानन्ति एव। यथा मरणं मम न भवेत् तथा कर्तुं कोऽपि उपायः अस्ति वा?" इति।

ज्ञानानन्दः मन्दहासं प्रकटयन् उक्तवान्- "महाराज! भवान् इदानीम् अपि तारुण्ये अस्ति। 'सदा एवम् एव भवामि' इति चिन्तयन् मरणात् भीतः भवान्। किन्तु कालान्तरे भवान् वृद्धः भविष्यति। दृष्टिः श्रवणशक्तिः च क्षीणा भविष्यति। दन्ताः मुखतः निर्गमिष्यन्ति। देहः दुर्बलः भविष्यति। एषः च प्रकृतिधर्मः। अस्याम् अवस्थायाम् चिरं जीवितव्यम् इति आशा एव न भवति। तदा मरणम् एव इच्छति भवान्। एवं स्थिते मरणस्य भीतिः किमर्थम्? मरणनिवारणार्थम् उपायः किमर्थम् अन्वेष्टव्यः?" इति।

कीर्तिसेनः ज्ञानानन्दं नमस्कृत्य- "महात्मन्! भवतः अनुग्रहेण मयि विवेकः उदितः। मरणभीतिः इदानीं दूरङ्गता। आगमनं सफलं जातम्" इति उक्त्वा राजधानीं प्रतिगतवान्।





# आस्थानकविः

पूर्वं चन्द्रचूडः नाम राजा आसीत्। तस्य आस्थाने कविद्वयम् आसीत्। प्रथमस्य नाम गौराङ्गः। द्वितीयस्य नाम गम्भीरः। गौराङ्गः बहूनि काव्यानि लिखितवान् आसीत्। महाकविः इति प्रसिद्धः आसीत् च। गम्भीरः गौराङ्गस्य अपेक्षया वयसा अल्पः, न तु पाण्डित्येन। ज्ञानेन सः अपि पूर्णकुम्भः इव आस्थाने शोभते स्म। स्वकाव्यैः जनप्रियः आसीत् च।

राजा तु साहित्याभिमानी। तं द्रष्टुं बहुभ्यः प्रदेशेभ्यः बहुजनाः कवयः पण्डिताः च आगच्छन्ति। स्वकृतीः महाराजाय अर्पयन्ति च। तासां शोधनं कर्तुं योग्यतां निर्णेतुं च राजा एकं विमर्शकम् इच्छति स्म।

चन्द्रचूडः स्वकीयं विचारं स्वसचिवाय मिहिरवर्मणे निवेदितवान्।

महाराजस्य वचनं श्रुत्वा मन्त्री उक्तवान्- "महाराज, आस्थाने महाकविः गौराङ्गः अस्ति किल? सः कृतीनां मौल्यनिर्णयं कर्तुं समर्थः अस्ति। पुनः किमर्थम् अन्यस्य अन्वेषणम्? सः एव आस्थानकविः भवतु" इति।

राजा सचिवस्य सूचनां शिरश्चालनपूर्वकम् अङ्गीकृतवान्। किन्तु मौनम् आश्रितवान्।

कानिचन दिनानि अतीतानि। लाटदेशात् भूषणः नाम कविः महाराजं द्रष्टुं आगतवान्। सः स्वकाव्यं महाराजाय समर्पयन् उक्तवान्- "महाप्रभो, अहं भवतां साहित्याभिमानं काव्यप्रीतिं च श्रुत्वा अत्र आगतवान्। इदं मम प्रप्रथमं काव्यम्। भवतः सन्निधाने समर्पयामि। कृपया अनुगृह्णातु" इति।

चन्द्रचूडः काव्यं स्वीकृतवान्। भूषणस्य वसतिव्यवस्थार्थं सेवकान् आदिष्टवान् च। अनन्तरं गौराङ्गम् आहूय उक्तवान्- "भवान् भूषणकवेः एतां कृतिं पठित्वा भवतः अभिप्रायं

"सुभद्रा"

सूचयतु" इति।

परेद्युः गौराङ्गः आगतवान्। "महाराज, अहं भूषणस्य काव्यं सम्पूर्णं पठितवान्। एतदेव तस्य प्रथमं काव्यम्। तथापि एकः अपि व्याकरणदोषः नास्ति" इति उक्तवान्।

महाकवेः गौरङ्गस्य गमनानन्तरं राजा कविं गम्भीरम् आहूय तदेव काव्यं दत्त्वा उक्तवान्- "एतत् पठित्वा भवतः अभिप्रायं सूचयतु" इति।

दिनद्वयानन्तरं गम्भीरः महाराजस्य समीपम् आगत्य "महाप्रभो, एतत् काव्यम् एतस्य कवेः प्रथमः प्रयत्नः। तथापि तत्र तत्र रसपरिपोषकाः सन्निवेशाः दृश्यन्ते। अतः एषः श्रेष्ठः कविः भविष्यति" इति उक्तवान्। महाराजस्य अनुमतिं स्वीकृत्य ततः गतवान् च।

अनन्तरं राजा सचिवं मिहिरवर्माणम् उक्तवान्- "गम्भीरः एव आस्थानकविः भवतु इति मम अभिप्रायः। यतः एतत्स्थानार्थं सः एव समर्थः। अद्य एव तं आस्थानकविस्थाने नियोजयितुम् इच्छामि। एतदर्थं योग्यव्यवस्थाम् उपकल्पयतु" इति।

मन्त्री मिहिरवर्मा आश्चर्येण- "महाप्रभो, एतादृशीं प्रमुखां पदवीम् अल्पवयस्काय गम्भीराय दातुम् इच्छति किल भवान्? एतं विषयं ज्ञात्वा महाकविः गौराङ्गः खेदम् अनुभवेत् एव। किन्तु महाप्रभुः कारणं विना एवं न आज्ञापयति। कारणं ज्ञातुम् अहं शक्नोमि



किम् ?" इति पृष्टवान् ।

"मन्त्रिवर्य ! महाकवेः महत्त्वं साधारण्यं वा तस्य विमर्शनकौशलम् अनुसृत्य निर्णीयते । भूषणस्य काव्यम् परिशील्य गम्भीरेण गौराङ्गेण च किम् उक्तम् इति भवान् जानाति एव" इति राजा उक्तवान् ।

मन्त्री पुनः- "तत् तु जानामि । तथापि वयसा गौराङ्गः एव ज्येष्ठः खलु ?" इति पृष्टवान् ।

तदा राजा उक्तवान्- "कविभ्यां काव्यं परिशीलितं, काव्यविमर्शनं कृतं च। गम्भीरः एव आस्थानकविः भवितुं योग्यः । यतः आस्थानं प्रति कवयः पण्डिताः च ये आगच्छन्ति तेषां काव्यस्य कलाकृतीनां च प्रोत्साहनं मम कर्तव्यं किल ? किन्तु एतदर्थं केवलं पण्डितः समर्थः न भवति । तेषां योग्यतां निर्णेतुं पाण्डित्येन सह रसज्ञता अपि अपेक्षिता भवति । केवलं दोषोद्घाटनं न पर्याप्तम् । गुणग्रहणम् अपि आवश्यकम् । गौराङ्गः भूषणस्य काव्यम् परिशील्य तत्र दोषाः न सन्ति इत्येव उक्तवान् । किन्तु गुणान् नैव लक्षितवान् । एषः विमर्शनक्रमः न युक्तः काव्यावलोकनाय" इति ।

मन्त्री शिरसा सम्मतिं सूचितवान् ।

"यदि गौराङ्गः आस्थानकविः भविष्यति तर्हि ये पण्डिताः राजाश्रयं आगमिष्यन्ति तेषां दोषान् एव प्रदर्शयिष्यति सः, न तु गुणान् । किन्तु गम्भीरः आस्थानकविः भविष्यति चेत् सः कवीनां पाण्डित्यं कविताशक्तिं च ज्ञातुं प्रयतिष्यते । सः समर्थः विमर्शकः सहृदयः च अस्ति । अतः एव गम्भीरः आस्थानकविः भवतु इति मम अभिप्रायः । एतेन बहवः कवयः कलाकाराश्च लाभं प्राप्नुयुः" इति सविस्तरं स्वकीयं विचारं राजा समर्थितवान् ।

तदनुसारं गम्भीरः आस्थानकविः अभवत् । तेन अनेके कवयः पण्डिताः च स्वयोग्यतानुसारं सम्मानं प्राप्तवन्तः । गम्भीरः उदारी विवेकी च इति प्रसिद्धः अभवत् ।





# आत्मश्लाघनं

वामनपल्ल्यां नागेन्द्रः नाम गृहस्थः आसीत्। तस्य पत्न्याः नाम सुशीला। नागेन्द्रः ग्रामे धनिकेषु अन्यतमः आसीत्। तस्य गोविन्दः नाम एकः पुत्रः। गोविन्दः विद्याभ्यासे निपुणः। किन्तु गृहकार्येषु तस्य सर्वथा अनासक्तिः। सर्वदा सः मित्रैः सह इतस्ततः अटन् समयं व्यर्थं यापयति स्म।

एवं स्थिते कदाचित् गोविन्दस्य मातुलः नटेशः स्वभगिनीं द्रष्टुम् आगतवान्। भागिनीपुत्रः व्यर्थं कालयापनं करोति इति ज्ञात्वा सः खिन्नः।

'मातापित्रोः भवतोः कारणेन एव सः एवं दुष्टः जातः' इति स्वभगिनीं भगिनीपतिं च तर्जितवान् नटेशः।

तदा नागेन्द्रः खेदेन उक्तवान्- "अस्माभिः किं वा कर्तुं शक्यम्? यावत् वदामः चेदपि सः न शृणोति एव" इति।

गोविन्दस्य मातुलः गोविन्दम् आहूय पृष्टवान्- "किं भोः गोविन्द! भवतः मातापितरौ भवत्सम्मुखे निन्दतः। स्नेहिताः तु भवतः असन्निधाने निन्दन्ति। कः एषः व्यवहारः भवतः?" इति।

"मम स्नेहिताः तादृशाः न" इति उक्तवान् गोविन्दः।

"एवं वा? तर्हि भवान् भवतः स्नेहितानां स्वभावं सम्यक् न जानाति। तत् ज्ञातुम् एकः उपायः अस्ति। स्नेहितानां पुरतः आत्मनः सामर्थ्यस्य श्रेष्ठतायाः च श्लाघनं करोतु। तदानीं ते किं वदन्ति इति पश्यतु" इति उक्तवान् नटेशः।

गोविन्दः तथैव कृतवान्। आरम्भे तु स्नेहिताः चिन्तितवन्तः यत् विनोदार्थं एषः एवं करोति इति। किन्तु 'विनोदार्थम् एवं न करोति' इति यदा तैः ज्ञातं तदा ते असमा-



धानेन उक्तवन्तः- "भवतः वैशिष्ट्यं वयं न जानीमः वा ? सर्वदा भवता सह एव भवामः किल। पुनः किमर्थम् आत्मश्लाघनं करोति अस्माकं पुरतः ?" इति।

तथापि गोविन्दः आत्मनः प्रवृत्तिं न त्यजति। सः वदति- "मम गृहे मदीयं किं स्थानम् इति भवन्तः न जानन्ति। सर्वकार्येषु अपि पिता मम सूचनां पालयति। मम अङ्गीकारं विना सः किमपि न करोति। यदि मम वचनेषु विश्वासः नास्ति तर्हि मम पितरं, मातरं मातुलं वा पृच्छन्तु भवन्तः" इति।

'आत्मश्लाघनं एषः न त्यजति एव' इति स्नेहिताः यदा ज्ञातवन्तः तदा ते क्रमशः गोविन्दस्य सम्पर्कम् एव त्यक्तवन्तः।

तदा गोविन्दः मातुलसमीपं गत्वा उक्तवान्- "भवतः वचनं सत्यम्। मम स्नेहिताः असूयापराः। अन्येषां श्रेष्ठतां ते न सहन्ते। तैः सह सञ्चरन् अहं मम कालं व्यर्थं यापितवान्। इदानीं मया किं करणीयम् इति भवान् एव वदतु" इति।

"भवान् भवतः मातापित्रोः वचनानि पालयन् तयोः प्रीतिं सम्पादयतु। एतेन एव भवतः हितं सिध्यति" इति उक्तवान् नटेशः।

"माता पिता च स्नेहिताः इव न आचरतः इत्यत्र कः विश्वासः ?" इति सन्देहं प्रकटीकृतवान् गोविन्दः।

"कुपुत्रः जायेत क्वचिदपि कुमाता न भवति इति श्रुतवान् किल ? पुत्रः यत्किमपि करोतु, मातापित्रोः सन्तोषः एव:" इति उक्तवान् नटेशः।

अनन्तरं सः स्वभगिनीं सुशीलां नागेन्द्रं च सूचितवान् यत् गोविन्दः भवतोः पुरतः यावत् आत्मश्लाघनं करोति चेदपि तत्सर्वं सोढव्यम् इति।

तद्दिनात् आरभ्य गोविन्दः स्वमातापित्रोः पुरतः आत्मश्लाघनं यथेष्टं कृतवान्। तथापि ते सहनया अभिमानेन च तत्सर्वं श्रुतवन्तः।

एतेन मातापित्रोः विषये गोविन्दस्य प्रीतिः विश्वासः च प्रवृद्धः। अतः सः मातापित्रोः वचनानि शृण्वन् गृहकार्येषु आसक्तिं प्रदर्शित-

बान्। कृषिकार्येषु अपि साहाय्यं कर्तुम् आरब्धवान्।

गोविन्दे जातं परिवर्तनं दृष्ट्वा नटेशः सन्तुष्टः। सः स्वग्रामं प्रति गमनसमये गोविन्दम् आहूतवान्- "अये! सर्वदा एकया एव रीत्या श्लाघनं करोति चेत् तस्य श्रवणे अन्ये रुचिं न प्रदर्शयन्ति। अतः भवान् महाकाव्यानि कथापुस्तकानि च पठतु। तत्र स्तुतिपराणि बहुविधानि वर्णनानि भवन्ति। तानि भवान् स्वाधीनानि करोतु। निरन्तरेण अध्ययनेन एतत् कर्तुं शक्नोति" इति।



मातुलस्य सूचनानुसारं गोविन्दः अध्ययने प्रवृत्तः अभवत्। एतत् दृष्ट्वा माता पिता च सन्तुष्टौ। किन्तु कालान्तरे गोविन्दः विविध-विशेषणैः आत्मनः मातापित्रोः च श्लाघनं कर्तुम् आरब्धवान्। एतेन निरन्तरश्लाघनेन मातापितरौ खिन्नौ। अतः 'बहिः सञ्चारं कृत्वा आगच्छतु' इति तदा तदा तौ वक्तुम् आरब्धवन्तौ। 'ग्रामे सर्वे जनाः गोविन्दस्य स्वभावं जानन्ति' इत्यतः ग्रामीणाः तं दृष्ट्वा दूरतः एव पलायनं कुर्वन्ति स्म।

अन्ते सुशीला प ति म उक्तवती- "किमिदम्? पुत्रस्य एषा श्लाघनपीडा दिने दिने वर्धते किल? कथम् एतत् परिहरामः? एतदर्थं कोऽपि उपायः चिन्तनीयः एव" इति।

"एतन्निवारणार्थम् एकः एव उपायः। यावच्छीघ्रम् एतस्य विवाहः करणीयः। तदानीं सर्वं सम्यक् भविष्यति" इति उक्तवान् नागेन्द्रः।

एतदनन्तरं गोविन्दस्य विवाहार्थं प्रयत्नः आरब्धः। किन्तु 'गोविन्दः आत्मश्लाघनपरः। केवलं वचने शूरः। अतिभाषणेन सर्वान् पीडयति' इति ग्रामीणाः जानन्ति स्म एव। अतः कोऽपि तस्मै कन्यां दातुं सिद्धः न आसीत्।

एतत्सन्दर्भे नटेशः तत्र आगतवान्। "कीदृशाः भवन्तः? गृहे एव नवनीते विद्यमाने घृतस्य अन्वेषणं कुर्वन्ति किल? मम पुत्री राधा विवाहयोग्या इति विस्मृतवन्तः



वा ? अथवा सा भवतां गृहस्य स्नुषा भवितुम् अनर्हा इति चिन्तयन्ति वा ?'' इति पृष्टवान् सः ।

राधायाः यद्यपि व्रतपूजादिषु विश्वासः नास्ति, दैवभक्तिः अपि सर्वथा नास्ति, तथापि सा गुणसम्पन्ना एव । एतादृशी गोविन्दं परिणयेत् इत्यत्र नागेन्द्रस्य सुशीलायाः वा विश्वासः न आसीत् । अतः तौ उक्तवन्तौ- ''सर्वे आवयोः पुत्राय कन्यां दातुं सङ्कोचम् अनुभवन्ति । एवं स्थिते भवान् सिद्धः स्यात् इति आवयोः कल्पना अपि न आसीत् । किन्तु भवान् सिद्धः चेत् आवाम् अपि सिद्धौ एव'' इति ।

राधागोविन्दयोः विवाहः सम्पन्नः । गोविन्दः पत्न्याः पुरतः आत्मश्लाघन आरब्धवान् । एतेन मातापित्रोः कष्टं निवृत्तम् अभवत् । किन्तु राधायाः कष्टं प्रवृद्धम् ।

राधायाः श्वशुरः श्वश्रूः वा प्रीत्या एव व्यवहरति स्म । गोविन्दः अपि तथैव । किन्तु केवलं तदीयम् आत्मश्लाघनं सोढुम् अशक्यम् आसीत् । एतत् निवारयितुम् इच्छन्ती राधा पूजाव्रतादीनां शरणं गतवती । प्रतिदिनं सा किमपि व्रतम् आचरति स्म । दिने बहुकालं पूजायां निरता भवति स्म । तादृशसन्दर्भेषु गोविन्दस्य पीडा न भवति स्म ।

एवं प्रथमं पूजाव्रतादिकम् अश्रद्धया आरब्धं चेदपि क्रमशः पूजादिषु राधायाः श्रद्धा उत्पन्ना । एतेन नागेन्द्रः सुशीला च बहु सन्तुष्टौ । आत्मनः सन्तोषं तौ पत्रद्वारा तस्याः पितरं सूचितवन्तौ ।

'पुत्री एवम् अल्पे एव काले देवपूजादिषु श्रद्धावती भवेत्' इति नटेशस्य कल्पना अपि न आसीत् । अतः सः नागेन्द्रस्य पत्रप्राप्तेः समनन्तरम् एव पुत्रीं द्रष्टुं गृहात् प्रस्थितः ।

नागेन्द्रस्य गृहे नटेशः पुत्रीम् एकान्ते आहूय सर्वं पृष्टवान् । पुत्री प्रवृत्तं सर्वम् उक्तवती । 'आत्मश्लाघनेन महान् लाभः एव जातः । सर्वेषां हितम् एव सिद्धम्' इति चिन्तितवान् नटेशः । किन्तु तस्य मनसि अन्या

अपि चिन्ता आसीत् यत् पुत्री स्वपतिविषये न तथा प्रीतिं प्रदर्शयति इति। यतः सा पत्युः सम्पर्कात् भीता आसीत्।

'गोविन्दः कथञ्चित् सन्मार्गे आनेतव्यः' इति चिन्तयित्वा नटेशः गोविन्दं कदाचित् ग्रामात् बहिः नीतवान्, उक्तवान् च- "गोविन्द ! दुष्टस्नेहितानां सम्पर्कः निवारणीयः इति दृष्ट्या मया सूचितम् आसीत्- 'आत्मश्लाघनं करोतु' इति। किन्तु तत् भवतः व्यसनम् एव जातम्। तेन च कोऽपि भवतः सहवासं न इच्छति इति भवान् अपि जानाति एव। अतः एतस्य दुरभ्यासस्य त्यागः एव उचितः किल ?" इति।

"आत्मश्लाघनं मम प्रवृत्तौ रूढम्। अत्र भवान् एव कारणम्। अतः एतस्य निवारणोपायम् अपि भवान् एव सूचयतु" इति उक्तवान् गोविन्दः।

नटेशः किञ्चित् आलोच्य उक्तवान्- "तर्हि एवं करोतु। इतःपरं अन्येषां गुणं सूक्ष्मं परिशीलयतु। सम्भाषणसमये अवकाशं प्राप्य तेषां गुणानां स्तुतिं करोतु। तदानीं सर्वे भवतः विषये तुष्टाः भवन्ति" इति।

गोविन्दः मातुलस्य वचनम् अङ्गीकृतवान्। तथैव आचरणम् अपि आरब्धवान्। एतेन अल्पे एव काले तस्य मित्राणां सङ्ख्या प्रवृद्धा। गृहसदस्याः अपि सन्तुष्टाः।

किन्तु गोविन्दस्य इदानीं नूतना समस्या। एतावत्पर्यन्तं सः आत्मश्लाघनं कुर्वन् आसीत्। अतः इदानीम् अन्येषां श्लाघने तस्य न तथा उत्साहः। अतः सः क्रमशः सम्भाषणम् एव न्यूनीकर्तुम् इष्टवान्। कार्यं विना तूष्णीम् उपविष्टं चेत् सम्भाषणे प्रवृत्तिः भवति। अतः अधिकाधिकं गृहकार्येषु व्यापृतः भवति स्म सः।

एवं कालान्तरे गोविन्दः 'कार्यदक्षः' इति कीर्तिं सम्पादितवान्। इदानीं बान्धवाः मित्राणि च 'अस्मदीयः गोविन्दः' इति साभिमानं कथयन्ति स्म।





# अनुकूला पत्नी

कस्मिंश्चित् ग्रामे कश्चित् कृषिकः आसीत्। तस्य पत्नी पत्युः अनुकूला। पतिः यद्यत् करोति तत्सर्वं तस्याः अनुमतम् एव। पतिं सदा गौरवेण पश्यति स्म सा।

तयोः गृहे धेनुद्वयम् आसीत्। एकैका अपि धेनुः यथेष्टं क्षीरं ददाति स्म। अतः तयोः गृहे क्षीरस्य दधिघृतादीनां च समृद्धिः। कृषिक्षेत्रतः तण्डुलाः धान्यानि च पर्याप्तमात्रेण उपलभ्यन्ते स्म। अतः तयोः जीवनं सुखमयम् आसीत्। कृषिकस्य पत्नी स्वबुद्धिकौशलेन शतरूप्यकाणां सञ्चयं कृतवती आसीत् अपि।

एकदा सा पतिम् उक्तवती- "आवयोः उपयोगार्थम् एका एव धेनुः पर्याप्ता। धेनुद्वयस्य सेवा कष्टकरी एव। अतः भवान् एकां धेनुं विक्रीय आगच्छतु। विक्रयणेन यत् धनं प्राप्यते, तेन उत्सवादीनाम् आचरणं कुर्मः। तदा सञ्चितं धनं तथैव स्थास्यति" इति।

कृषिकः एतत् अङ्गीकृत्य धेन्वा सह नगरं प्रस्थितः। नगरे महता प्रयत्नेन अपि सः धेनुं विक्रेतुं न शक्तवान्। "विक्रयणं न जातं चेत् का हानिः? अस्मदीया धेनुः अस्माकं समीपे एव अवशिष्टा, तावदेव" इति चिन्तयित्वा सः गृहं प्रति प्रस्थितः।

मार्गे अश्वेन सह गच्छन् कश्चित् मिलितवान्। 'धेनोः अपेक्षया अश्वः एव वरम्' इति चिन्तयित्वा कृषिकः धेनुं तस्मै दत्त्वा अश्वं स्वीकृतवान्।

किञ्चित् अग्रे यदा गतं तदा अन्यः कश्चित् अजेन सह आगच्छन् दृष्टः। कृषिकः तस्मै अश्वं दत्त्वा अजं क्रीतवान्।

इतोऽपि किञ्चिद्दूरं गमनानन्तरं बकेन सह गच्छन् कश्चित् मिलितवान्। कृषिकः अजं दत्त्वा बकं क्रीतवान्।

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा।"

इतोऽपि अग्रे यदा गतं तदा कृषिकः कुक्कुटेन सह गच्छन्तं कञ्चित् दृष्टवान्। 'कुक्कुटः बकात् अपि लघुतरः' इति चिन्तयित्वा सः बकं दत्त्वा कुक्कुटं क्रीतवान्।

गृहप्राप्त्यर्थम् इतोऽपि बहुदूरं गन्तव्यम् आसीत्। किन्तु कृषिकः बुभुक्षया पीडितः आसीत्। अतः सः मार्गे विद्यमानाय गृहस्थाय कुक्कुटं दत्त्वा उदरपूर्णं भोजनं कृतवान्। ततः ग्रामं प्राप्तवान् च।

मार्गे पार्श्वगृहस्थः स्नेहितः मिलितवान्। "नगरं गतवान् आसीत् वा? वाणिज्येन महान् लाभः सम्पादितः स्यात् किल?" इति पृष्टवान् सः।

एषः कृषिकः प्रवृत्तं सर्वम् निवेदितवान्। तदा स्नेहितः "हन्त! किम् एतत् अकार्यम्!" इति उद्गारं प्रकटितवान्।

"अये! किमर्थम् एवं वदति भवान्? धेनुपालने क्लेशः आसीत्। अतः विक्रयणार्थं नीतवान्। आत्मरक्षणं प्रथमकर्तव्यम्। तत् मया साधितम्। अत्र कः दोषः?" इति पृष्टवान् कृषिकः।

"गृहगमनानन्तरं दोषः ज्ञायते। यदा पत्नी ताडयति तदा आत्मनः दोषं ज्ञातुं शक्नोति भवान्" इति उक्तवान् सः स्नेहितः।

"मम पत्नी ताडनं किं, तर्जनम् अपि न करोति" इति उक्तवान् कृषिकः।



"भवतः पत्नी स्वभावेन साध्वी एव स्यात्। किन्तु अद्य तर्जयति एव" इति विश्वासेन उक्तवान् स्नेहितः।

"तथा न भवति एव" इति कृषिकः उक्तवान्। एवं च उभयोः मध्ये स्पर्धाभावः उत्पन्नः।

"मम समीपे शतं रूप्यकाणि सन्ति। गृहगमनानन्तरं पत्नी यदि मां तर्जयति तर्हि अहं भवते तानि रूप्यकाणि ददामि" इति उक्तवान् कृषिकः।

"सा तर्जयति एव। यदि तथा न भवति तर्हि अहं शतं रूप्यकाणि दातुं सिद्धः" इति स्नेहितः उक्तवान्।

"एवं तर्हि भवान् मया सह आगत्य बहिः

तिष्ठतु। आवयोः सम्भाषणं शृणोतु" इति उक्त्वा कृषिकः तं स्वगृहं नीतवान्। बहिः उपवेशितवान् च।

"धेनुं विक्रीतवान् वा? कति रूप्यकाणि प्राप्तानि?" इति पृष्टवती कृषिकस्य पत्नी।

"धेनुं क्रेतुं कोऽपि सिद्धः न आसीत्। अतः धेनुं दत्त्वा अश्वं क्रीतवान्" इति उक्तवान् कृषिकः।

"उचितम् एव कृतम्। एकं शकटम् अपि क्रेष्यामः। तेन प्रवासे सौकर्यं सिध्यति।"

"अश्वः अपि न आनीतः। अश्वं दत्त्वा अजम् आनीतवान्।"

"तत् अपि उचितम् एव। अश्वस्य पोषणं क्लेशकरः। अजः तु स्वयम् आहारं सम्पादयति। अस्तु, सः अजः वा कुत्र?"

"तिष्ठतु, वदामि। मार्गे बकं दृष्टवान्। अतः अजं दत्त्वा बकं क्रीतवान्।"

"एवं वा? अजस्य अनुसरणं क्लेशकरः आसीत् एव। तत् निवृत्तम् अभवत्।"

"तं बकं दत्त्वा उत्तमं कुक्कुटं क्रीतवान्।"

"एतत् मम अपि अनुमतम् एव। प्रातः उत्थाने कुक्कुटः उपकरोति।"

"अनन्तरं किम् अभवत् इति जानाति वा? मार्गे अहम् अतीव बुभुक्षितः अभवम्। अतः कुक्कुटं दत्त्वा उदरपूर्णं भोजनं कृतवान्। अतः एव वेगेन एतावच्छीघ्रम् आन्तुम् शक्तवान् अहम्।"

"हन्त! सुखेन आगतवान् किल? प्राणानाम् अपेक्षया कुक्कुटः न श्रेष्ठः" इति उक्तवती पत्नी।

कृषिकः बहिः आगत्य स्नेहितं पृष्टवान्- "श्रुतवान् किल आवयोः सम्भाषणम्?" इति।

"श्रुतवान् अहम्। मम गृहम् आगत्य शतं रूप्यकाणि स्वीकरोतु" इति वदन् स्नेहितः स्वगृहं प्रति प्रस्थितः।

'पत्नी अनुकूला आसीत्' इति कारणतः कृषिकः धेनुमौल्यापेक्षया द्विगुणितं धनं विनायासं प्राप्तवान्।






कुमारीविवाहविषये चिन्ताकुलम् अनरण्य-महाराजं मन्त्रिणः एवम् उक्तवन्तः- "महाराज! पिप्पलादः श्रेष्ठकुले उत्पन्नः, महातपस्वी च। एतादृशाय कन्यादानं नाम सौभाग्यस्य विषयः। भवतः पुत्री एतं महापुरुषं परिणेतुं इच्छेत् अपि। अतः यथाकथमपि भवतु, तं मुनिं भवतः पुत्र्यै प्रदर्शयामः। सा यदि अङ्गीकरोति तर्हि विवाहः प्रचलतु। यदि न इच्छति तर्हि पिप्पलादः गच्छति। तदा भवतः दोषः न भवति एव" इति।

मन्त्रिणां वचनेन अनरण्यः किञ्चित् मनः-समाधानं प्राप्तवान्। सः पुत्रीं पद्मावतीम् आहूतवान्। पिप्पलादं पुत्र्यै प्रदर्शितवान् च। पद्मावती पिप्पलादं परिणेतुं अङ्गीकृतवती। एवं अनरण्यस्य भीतिः दूरङ्गता अभवत्। पद्मावती-पिप्पलादयोः विवाहेन अनरण्यः अपारां कीर्तिं प्राप्तवान्।

विवाहानन्तरं पिप्पलादः पत्न्या सह आश्रमं गतवान्। महाराजस्य अनरण्यस्य पुत्रीविषये अत्यधिकप्रीतिः आसीत्। सः स्वज्येष्ठपुत्रं सिंहासने उपवेश्य पद्मपत्नीभिः सह पिप्पलादस्य आश्रमं आगतवान्। तत्र निरातङ्कं वानप्रस्थजीवनं आरब्धवान्।

एकदा पद्मावती स्नानार्थं नदीं प्रति प्रस्थिता आसीत्। धर्मदेवः सुन्दरयुवकवेषं धृत्वा पद्मावतीसमीपं गत्वा उक्तवान्- "हे सुन्दरि! भवत्याः रूपम् अनुपमम्। वृद्धेन कुरूपिणा पतिना सह निवसन्ती भवती



स्वयौवनं व्यर्थं न करोतु। मातापित्रोः आग्रहानुसारं भवती एतं परिणीतवती इति भाति। मातापितरः केवलं स्वार्थपराः। भवत्या वा स्वभविष्यविषये चिन्तनीयं किल? ते तु स्वकर्तव्यात् विमोचनं प्राप्तुम् एवम् आचरितवन्तः। किन्तु भवती एतद्विषये विवशा न भवतु। भवती मद्वचनं श्रृणोतु। मया सह मद्राज्यम् आगच्छतु। साम्राज्ञी भूत्वा यथेष्टं सुखभोगम् अनुभवतु'' इति।

पद्मावती एतं वचनं श्रुत्वा क्रुद्धा। अतः सा ''भवान् मम पतिं निन्दन् अपराधं कृतवान्। अतः भवान् क्षयपीडितः भवतु'' इति शापं दत्तवती।

शापेन भीतः धर्मदेवः उक्तवान्- ''साध्वि! अहं राजा न, अपि तु धर्मदेवः। भवत्याः पातिव्रत्यस्य परीक्षार्थम् आगतवान्। भवती मां क्षाम्यतु। कृपया शापं प्रतिस्वीकरोतु'' इति।

तदा पद्मावती उक्तवती- ''महात्मन्! यत् प्रवृत्तं तत् गतम् एव। शापं प्रतिस्वीकर्तुं मम शक्तिः नास्ति। भवान् चतुर्षु युगेषु स्वधर्मेषु एकेन हीनः सन् चिर-कालं जीवतु'' इति।

एवं पद्मावत्याः कथाम् उक्त्वा वशिष्ठः मेनां हिमवन्तं च उक्तवान्- ''भवन्तः अपि अनरण्यस्य आदर्शं पालयन्तः शिवपार्वत्योः विवाहं निर्वर्तयन्तु। यतः शिवः पार्वत्या अनुमतः। एतेन जगतः हितं सिध्यति। भवान् अपि सर्वेषाम् आदरपात्रं भविष्यति'' इति।

वशिष्ठस्य उपदेशेन प्रभावितौ मेना हिमवान् च शिवपार्वत्योः विवाहम् अङ्गीकृतवन्तौ। अन्ये परिवारजनाः अपि अत्र सहमताः आसन्।

मेना हिमवान् च पार्वत्याः हस्तं अरुन्धती-वशिष्ठयोः हस्ते स्थापयित्वा उक्तवन्तौ- ''एवं तर्हि शीघ्रम् एव शिवपार्वत्योः विवाहः भवतु। विवाहमुहूर्तः निश्चितः भवतु'' इति।

'भवती जगन्माता भवतु' इति अरुन्धती पार्वतीम् आशीर्वादेन अनुगृहीतवती। माघ-

शुक्ले एकादश्यां तिथौ आर्द्रानक्षत्रयुक्ते वृश्चिकलग्ने ब्राह्ममुहूर्ते शिवपार्वत्योः विवाहः निश्चितः ।

अनन्तरं सप्तर्षयः शिवसमीपम् आगतवन्तः । विवाहमुहूर्तं निवेदितवन्तः च । पुनः सूचितवन्तः यत् अग्रिमकार्यार्थं इन्द्र-विष्णु-ब्रह्मादीन् नियोजयतु । ते एव एतत्कार्यार्थं समर्थाः' इति ।

अत्र पार्वत्याः गृहे विवाहार्थम् उत्साहेन कार्यं क्रियमाणम् आसीत् । आवश्यकसामग्र्यः एकत्रीकृताः । बन्धुभ्यः निमन्त्रणं प्रेषितम् । हिमवान् मन्त्रिणां साहाय्येन, विना लोपं कार्यं साधयन् आसीत् ।



नववधूं पार्वतीम् अलङ्कर्तुं नगरस्य सर्वाः सुमङ्गल्यः हिमवतः राजप्रासादम् आगतवत्यः । शुभे मुहूर्ते पार्वत्याः मङ्गलस्नानं समाप्तम् । पार्वती धूपशोधितं कौशेयवस्त्रं धृतवती । सुगन्दद्रव्यैः शरीरं विलिप्य ललाटे कस्तूरी-तिलकं, कण्ठे सुवर्णाभरणानि पुष्पहारं च धृतवती ।

हिमवता प्रेषितं पार्वतीविवाहविषयकं निमन्त्रणं प्राप्य सर्वे बान्धवाः सपरिवारम् आगतवन्तः । ते आत्मना सह स्वर्णकमलानि मुक्तामाणिक्यादीनि च उपायनरूपेण आनीतवन्तः ।

अन्ये पर्वताधिपाः सुगन्धद्रव्याणि, जात्यश्वान् उत्तमगजान् अमूल्यरत्नानि च उपायनरूपेण प्रेषितवन्तः ।

हिमवान् तानि उपायानानि कृतज्ञतापूर्वकं स्वीकृतवान् । तत्तद्योग्यतानुगुणं वसति-व्यव-स्थार्थम् आदिष्टवान् च ।

आगतानां वसत्यर्थं हिमवान् दशसहस्रयोजन-विस्तीर्णायां भूमौ विवाहमण्डपं निर्मितवान् । एतत्कार्यार्थं विश्वकर्मा साहाय्यं कृतवान् । हिमवतः राजधानी ओषधिपुरम् अपूर्वरूपेण सज्जीकृतम् ।

विवाहकल्पनया एव शिवः इदानीं बहु-सन्तुष्टः । सः 'नारदम् आनयतु' इति वायुदेवं सूचितवान् । वायुदेवः तत्क्षणे एव ततः प्रस्थितः ।



वायुदेवस्य सूचनानुसारम् आगतः नारदः शिवं नमस्कृत्य आह्वानकारणं पृष्टवान्।

प्रसन्नचित्तः शिवः उक्तवान्- "देवर्षे! पञ्चदिनानाम् अनन्तरम् अहं पार्वतीं परिणेष्यामि। कानिचन दिनानि एव अवशिष्टानि। भवान् तु मनोवेगेन सञ्चारं कर्तुं समर्थः किल? त्रिलोकनिवासिनः सर्वे विवाहार्थं निमन्त्रणीयाः। 'आवश्यकसामग्रीभिः सह आगन्तव्यम्' इति कुबेरादयः सूचनीयाः। एतत्सर्वं भवतः दायित्वम्" इति।

नारदः शिवेन उक्तं कार्यं सन्तोषपूर्वकम् अङ्गीकृतवान्। शिवस्य अनुमतिं प्राप्य ततः निर्गतः च। सर्वप्रथमं सः इन्द्रविष्णुब्रह्मादीन् देवान् निमन्त्रितवान्। अनन्तरं भूलोकं नागलोकं च गत्वा- "माघशुक्ले एकादश्यां ब्राह्ममुहूर्ते शिवपार्वत्योः विवाहः भविष्यति। भवन्तः सर्वे सपरिवारम् आगच्छन्तु" इति आह्वानं दत्तवान्।

अनन्तरं नारदः कुबेरसमीपं गत्वा- "आवश्यकसामग्रीभिः सह शीघ्रम् एव भवता प्रस्थातव्यम्" इति तं सूचितवान्। ततः कैलासं प्राप्तवान् च।

शिवस्य आमन्त्रणानुसारम् इन्द्रविष्णुब्रह्मादयः देवाः ऋषिगणाः च कैलासम् आगतवन्तः। नन्दीश्वरः रुद्रगणेन सह सर्वान् स्वागतीकृतवान्। सर्वेषां योग्यवसतिव्यवस्थां कृतवान् च।

अस्मिन् विवाहे ब्रह्मा एव पुरोहितः। विष्णुः वध्वाः सहोदरत्वेन निश्चितः। इन्द्रादिदेवाः अन्ये देवगणप्रमुखाः ऋषयः च विवाहसदस्याः जाताः।

शिवस्य मङ्गलाभिषेकार्थं बृहस्पतिः उत्कृष्टं मुहूर्तं निश्चितवान्।

गन्धर्वस्त्रियः, यक्षिण्यः, लक्ष्मीः, अरुन्धती, सरस्वती, शचीदेवी इत्यादयः महापतिव्रताः, गरुडः गन्धर्वाः इत्यादयः च शिवस्य मङ्गलस्नानं कारितवन्तः। हरिचन्दनेन शिवस्य शरीरं लेपितवन्तः च। कण्ठहारं धृत्वा शिवः वररूपेण सिद्धः अभवत्।

अत्रिभृगुगौतमादयः महर्षयः शिवस्य हस्ते

शास्त्रविधिपूर्वकं प्रतिसरं बद्धवन्तः। नवग्रहाणां पूजां निर्वर्तितवन्तः च।

पुरोहितस्य ब्रह्मणः आदेशानुसारं शिवः बान्धवादिपरिवारेण सह मङ्गलवाद्यसमेतः ओषधिपुरं प्रति प्रस्थितः।

नन्दीश्वरः कैलासस्य रक्षणार्थं रुद्रगणस्य अधिपतीन् नियुज्य प्रमथगणेन सह ईश्वरम् अनुसृतवान्।

नन्दीश्वरेण सह वीरभद्रः, चण्डीश्वरः, भैरवः इत्यादयः स्वस्ववाहनम् आरुह्य सोत्साहं प्रस्थिताः।

वरः शिवः देवगजे उपवेशितः। सरस्वती ब्रह्मा च हंसवाहनम् आरूढवन्तौ। लक्ष्मीः विष्णुः च गरुडं, शची इन्द्रः च स्वयंप्रवर्तमानं सिंहासनं च आरूढवन्तः।

कुबेरः नवनिधिसमेतः नन्दिवाहनम् आरूढवान्। देव्यः ऋषिपत्न्यः अप्सरसः च दिव्यवस्त्राणि सुगन्धद्रव्याणि च स्वीकृत्य विमानम् आरूढवत्यः।

यदा वरयात्रा नगरद्वारम् आगता तदा हिमवान् पुरोहितेन गर्गमुनिना, मेनकया, पुत्रैः च सह आगत्य मङ्गलविधिपूर्वकं सर्वेषां स्वागतं कृतवान्।

ब्रह्माणं, विष्णुम् इन्द्रं, ऋषीन् च प्रणम्य हिमवान् शिवं नमस्कारपूर्वकम् उक्तवान्- ''भवान् जगदीश्वरः। भवतः सम्बन्धेन अहं



महत्त्वं प्राप्तवान्। सर्वे देवाधिदेवाः मम गृहम् आगताः इति तु मम सौभाग्यम्। भवान् पार्वतीपाणिग्रहणं करोतु। मां मम वंशं च पावयतु'' इति।

अनन्तरं सः शिवाय वस्त्र-गन्ध-पुष्प-ताम्बूलादीनि समर्पितवान्। आगतेभ्यः पानीयं दत्तवान्। सर्वेषां स्वागतानन्तरं श्रमनिवारणार्थं चामरवीजनस्य व्यवस्थां कृतवान्।

वधूपक्षीयाः स्त्रियः परस्परं वदन्ति स्म- ''अस्माकं पार्वती भाग्यशालिनी। शतमन्मथ-समं सुन्दरम् ईश्वरं सा पतिरूपेण प्राप्तवती'' इति।

मेना शिवस्य समीपम् आगत्य उक्तवती- ''अन्येषां वचनेन प्रभाविता अहं पूर्वं भवतः



विषये सन्देहं प्रकटितवती आसम्। निन्दनम् अपि कृतवती। कृपया एतत्सर्वं क्षाम्यतु। मम गृहम् आगत्य वरपूजां स्वीकरोतु। पार्वतीं परिणयतु च'' इति।

अनन्तरं नगरस्य वृद्धाः आगत्य शिवम् आशीर्वचनैः अनुगृहीतवन्तः।

मार्गेषु पुष्पाणि रत्नानि अक्षताः च विकीर्णाः आसन्। मार्गयोः पार्श्वे रमणीयानि तोरणानि दृश्यन्ते स्म। मेना हिमवान् च वरं शिवं विवाहमण्डपसमीपं नीतवन्तौ।

वरपक्षीयेभ्यः सर्वेभ्यः उचितानि आसनानि परिकल्प्य, व्यवस्थां पुनः परिशील्य च तौ स्वभवनं प्रतिगतवन्तौ।

पार्वती कुलाचारं पालयन्ती देवीपूजनार्थम् अम्बिकामन्दिरं गतवती। यदा सा स्वसखीभिः सह मन्दिरमार्गे प्रस्थिता तदा देवताः तां दृष्ट्वा परस्परं उक्तवत्यः- ''एषा तु साक्षात् पराशक्तिः एव। एतस्याः विवाहानन्तरं अस्माकं कष्टानि परिहृतानि भविष्यन्ति। वयं धन्याः भविष्यामः'' इति।

पार्वती अम्बिकापूजां समाप्य प्रत्यागतवती। विवाहमुहूर्तः आसन्नः आसीत्। ऐरावतम् आरुह्य आगतः शिवः विवाहमण्डपं प्रविष्टवान्। विवाहवेदिकाम् आरूढवान् च।

मेना हिमवान् च जामातुः पादौ प्रक्षाल्य तत् जलं शिरसि धृतवन्तौ। पार्वत्याः हस्तं शिवस्य हस्ते स्थापयित्वा कन्यादानं कृतवन्तौ।

गुरुवृद्धानाम् आशीर्वादेन पार्वती शिवस्य पत्नी अभवत्। ऋषिवर्याः वेदमन्त्रपूर्वकम् आशीर्वादं कृतवन्तः।

एवं शिवपार्वत्योः विवाहः महता वैभवेन सम्पन्नः। देवाः ऋषयः इत्यादयः शिवस्य अनुमतिं प्राप्य स्वस्वनिवासं प्रतिगतवन्तः।

शिवः कानिचन दिनानि यावत् श्वशुरगृहे आसीत्।

अनन्तरं कैलासं गन्तुम् उत्सुकः सः नन्दीश्वर-द्वारा हिमवते स्वकीयाम् कैलासगमनेच्छां निवेदितवान्।

मेना हिमवान् च पार्वत्याः -प्रेषणार्थं व्यवस्थां कृतवन्तौ। तौ पार्वत्यै सुन्दराणि

वस्त्राणि, अलङ्कारसाधनानि, गृहोपकरण-वस्तूनि, सिंहवाहनं परिचारिकाः च दत्तवन्तौ। ''अस्माकं पुत्री पार्वती सुकोमला। एतया सह अतीवमृदुतया प्रीत्या च व्यवहारः करणीयः'' इति शिवं प्रार्थितवन्तौ। वृद्धाः स्त्रियः आगत्य पार्वतीम् स्वानुभवसारं उपदिष्टवत्यः।

शुभे मुहूर्ते शिवः पार्वत्या सह कैलासं प्रस्थितः। कैलासप्राप्त्यनन्तरं गृहप्रवेशविधिः अपि सम्पन्नः। दिनत्रयं यावत् समारम्भः प्रवृत्तः। एतदनन्तरं ब्रह्मा, विष्णुः, इन्द्रः, इत्यादयः स्वनिवासं गताः।

सर्वेभ्यः तत्तद्योग्यतानुसारम् उपायनानि दत्त्वा कृतज्ञतापूर्वकम् उपकारं संस्मृत्य ईश्वरः देवान् ऋषीन् गन्धर्वान् अप्सरसः च प्रेषितवान्।

सर्वेषां गमनानन्तरं शिवः नन्दिकेश्वरम् उक्तवान्- ''आवयोः वसत्यर्थं महासौधः सज्जीकरणीयः। सौधस्य अलङ्कारार्थम् अन्यकार्यार्थं च अन्येषां साहाय्यं स्वीकरोतु'' इति।

नन्दिकेश्वरः गणाधिपतिभिः सह गत्वा महासौधं सुगन्धजलेन क्षालितवान्। सुगन्धद्रव्यैः रत्नमालादिभिः च भवनस्य अलङ्कारं कृतवान्। गृहस्य पुरतः मुक्ताचूर्णैः रङ्गवल्लीं लेखितवान्। प्रकोष्ठे हंसतूलिकातल्पं प्रसारितवान्। भित्तौ रमणीयानि चित्राणि स्थापितवान्। पुष्पमालाभिः सौधस्य प्रतिकोणम् अपि अलङ्कृतम् अभवत्। एवं महासौधः सम्पूर्णतया सज्जः अभवत्।

एतदनन्तरं शिवः नन्दीश्वरादीन् प्रमुखान् आहूय उक्तवान्- ''आवां विश्रान्त्यर्थं गच्छावः। विश्रान्तिसमये कोऽपि एतं सौधं न प्रविशेत्। अतः चतसृषु दिक्षु अपि रक्षणव्यवस्था भवतु'' इति।

शिवः पार्वत्याः हस्तं गृहीत्वा महासौधस्य शयनगृहं प्रविष्टवान्।

शिवगणीयाः जागरूकाः सन्तः भवनस्य रक्षणे निरताः आसन्।



# प्रजाप्रतिनिधिः

नागपल्ली सुसम्पन्नः ग्रामः। तस्मिन् ग्रामे वामनमूर्तिः नाम कश्चित् आसीत्। ग्रामे यत्र कुत्रापि लघु विवादः उत्पन्नः चेदपि वामनमूर्तिः तत्र उपस्थितः भवति स्म। वदति स्म च- "एतस्य विवादस्य निर्णयः अत्र न भविष्यति। अतः न्यायालयः गन्तव्यः" इति।

एकदा प्रजाप्रतिनिधिः कश्चन राजधानीं प्रति प्रेषणीयः आसीत्। किन्तु कस्यापि प्रेषणविषये ग्रामीणानाम् एकाभिप्रायः न आसीत्। अन्ते ग्रामीणाः एतद्विषये निर्णयाधिकारं ग्रामप्रमुखस्य अधीनं कृतवन्तः।

ग्रामप्रमुखः दित्राणि दिनानि यावत् रात्रौ वेषान्तरेण ग्रामे सञ्चारं कृतवान्। अन्ते उक्तवान्- "वामनमूर्तिः एव प्रजाप्रतिनिधित्वेन राजधानीं गच्छतु" इति।

तदा ग्रामीणाः आश्चर्येण पृष्टवन्तः- "तं विवादजनकं वामनमूर्तिं प्रजाप्रतिनिधित्वेन प्रेषयामः वा" ? इति।

ग्रामप्रमुखः शान्तस्वरेण उक्तवान्- "आम्, वामनमूर्तिः ग्रामेषु विवादं जनयति इति मम अपि सन्देहः आसीत् एव। गतद्वित्रेषु दिनेषु अटनेन मम सन्देहः वास्तविकः इति दृढीकृतः। वामनमूर्तिं यदि प्रजाप्रतिनिधित्वेन प्रेषयामः तर्हि ग्रामे शान्तिः व्याप्ता भवति। यतः प्रजाप्रतिनिधिः राजधान्याम् एव निवसेत् किल ?" इति।

ग्रामवासिनः ग्रामप्रमुखस्य वचनम् अङ्गीकृतवन्तः। ऐकमत्येन ते वामनमूर्तिं प्रजाप्रतिनिधिं राजधानीं प्रेषितवन्तः च।





# अविमृश्यकारिता

इराक्‌देशे केरवान्‌राज्यम् अन्यतमम्। एकदा कश्चन युवकः एतस्य राज्यस्य राजा अभवत्। आत्मानं बहु मन्यमानः सः सर्वदा आत्मश्लाघनं करोति स्म।

"अहं यत् यत् करोमि तत्तर्वं विचिन्त्य एव करोमि। अतः मम कार्याणि सर्वदा सफलानि भवन्ति" इति वदति स्म सः।

महाराजस्य कृपादृष्टिम् अभिलषन्तः तत्परिवारजनाः राज्यप्रमुखाः नागरिकाः च मिथ्यास्तुतिं कुर्वन्ति स्म- "भवतः बुद्धिः असाधारणी। भवादृशः राजा इतः पूर्वं न आसीत्" इति।

किन्तु वृद्धः मन्त्री तदा तदा वदति स्म- "प्रभो, किमपि कार्यं अविचिन्त्य न करणीयम्। पूर्वापरम् आलोच्य विवेकपूर्वकं कार्यं करणीयम्" इति।

वृद्धः एषः मन्त्री सर्वदा एवं किमर्थं वदति इति नवयुवकः महाराजः न जानाति एव।

महाराजेन एकः गृध्रः पालितः आसीत्। तं गृध्रं महाराजः बहु प्रीत्या पश्यति स्म। गृध्रः विवेकशीलः। सः सर्वदा महाराजेन सह तिष्ठति। यदा महाराजः मृगयार्थं गच्छति तदा एषः गृध्रः आकाशे उड्डयमानः तम् अनुसरति। यत्र वन्यजीविनः अधिकतया निवसन्ति, यत्र हरिणादयः दृश्यन्ते, तं प्रदेशं महाराजाय सूचयति स्म। अपायम् अपि पूर्वम् एव सूचयति स्म सः।

एकदा महाराजः मितपरिवारेण सह मृगयार्थं प्रस्थितः। मार्गे कश्चन सुन्दरः हरिणः दृष्टः। सर्वे उत्साहेन तं मृगं परितः आक्रम्य स्थितवन्तः।

महाराजः परिवारजनान् सूचितवान्- "सर्वे जागरूकतया तिष्ठन्तु। एषः हरिणः

"अरेबिया कथा"

कुतश्चित् अपि पलायनं न कुर्यात्। यदि एषः पलायनं करोति तर्हि तस्यां दिशि यः अस्ति सः कठोरतया दण्ड्यते'' इति।

हरिणः भीत्या कम्पमानः किञ्चित्कालं परितः पश्यन् आसीत्। अनन्तरम् अकस्मात् उत्प्लुत्य महाराजम् उल्लङ्घ्य पलायनम् अकरोत्।

'एवं हस्तलब्धः हरिणः पलायितः' इति कारणेन राजा कुपितः। 'एतं हरिणं मारयामि एव' इति वदन् सः अश्वं प्रेरितवान्। हरिणम् अनुसृत्य धावितवान् च।



स च अरण्यप्रदेशः। हरिणः तु वृक्षानां मध्ये धावन् गुल्मादिकं प्रविशन् सुलभतया अग्रे गच्छति स्म। किन्तु अश्वः एवं गन्तुं न शक्नोति। अतः हरिणराजयोः मध्ये अन्तरम् अधिकम् अभवत्। गृध्रः आकाशे उड्डयनं कुर्वन् आसीत्।

गृध्रस्य साहाय्येन राजा हरिणम् सम्यक् अनुसरन् आसीत्। एवं धावन्तौ तौ अरण्य-सीमाम् अतिक्रम्य गतवन्तौ। अस्मिन् प्रदेशे तु वृक्षाः विरलाः। केचन गुल्माः तत्र तत्र दृश्यन्ते स्म। 'एषः एव उचितः समयः' इति चिन्तयन् राजा हरिणम् उद्दिश्य बाणप्रयोगं कृतवान्। हरिणः वेदनाम् अनुभवन् भूमौ अपतत्।

हरिणमरणेन सन्तुष्टः महाराजः श्रम-निवारणार्थं कस्याश्चित् शिलायाः उपरि उपविष्टवान्। तत्पार्श्वे गृध्रः अपि उपविष्टः।

महाराजः अटनेन श्रान्तः आसीत्। पिपासया बाधितः आसीत् अपि। अतः सः जलार्थं परितः दृष्टिं प्रसारितवान्। पार्श्वे एव विशालपर्णयुतः वृक्षः आसीत्। द्रोणाकारेण स्थिते पत्रे किञ्चित् जलम् आसीत्। उपरिष्टात् बिन्दुरूपेण जलं स्रवति स्म। 'एतेन जलेन पिपासा तु शान्ता न भवति। किन्तु एतेन कण्ठः आर्द्रीकर्तुं शक्येत'' इति चिन्तयित्वा महाराजः जागरूकतया तत् पर्णं हस्ते स्वीकृतवान्। पानार्थम् उद्युक्तः च।

अपरक्षणे एव गृध्रः उड्डीय आगतवान्। महाराजस्य हस्ते स्थितं पत्रं मुखेन पातितवान्। पूर्वस्थानं गत्वा उपविष्टः च।

'किम् एवम्? एवं कुर्वन् सः गृध्रः स्वपिपासां निवारयन् अस्ति वा?' इति सन्देहं प्राप्तवान् महाराजः। गृध्रं कोपेन पश्यन् पततः जलबिन्दून् अन्यपत्रे जागरूकतया सङ्गृहीतवान्। गृध्रः इदानीम् अपि वेगेन आगत्य स्वपादेन महाराजस्य हस्ते स्थितं पत्रं पातितवान्।

महाराजः अत्यधिकं कुपितः अभवत्। सः गृध्रं स्वसमीपम् आगन्तुं हस्तसङ्केतेन सूचितवान्। यदा गृध्रः समीपम् आगतः तदा एकेन खड्गप्रहारेण तस्य शिरश्छेदं कृतवान् च।

किन्तु अपरक्षणे महाराजस्य मनसि जिज्ञासा उत्पन्ना- 'एतत् जलं कुतः आगच्छति इति पश्यामि' इति। अतः सः शिलाम् आरूढवान्। तत्र सः दृष्टवान् यत् वृक्षस्य उपरि सुप्तस्य कस्यचित् महासर्पस्य मुखतः विषबिन्दूनि एकैकशः स्रवन्ति! गृध्रः महाराजं रक्षितुम् इच्छन् एव पर्णं पातितवान् आसीत्।

वस्तुस्थितिं ज्ञात्वा महाराजः अतीव दुःखम् अनुभूतवान्। समीपे एव कश्चन नदीप्रवाहः तेन दृष्टः। किन्तु पिपासानिवारणस्य इच्छा एव तस्य मनसि लुप्ता आसीत्। सः झटिति शिलाशिखरतः अवतीर्णः। मृतस्य गृध्रस्य शरीरम् अङ्के स्थापयित्वा रोदितुम् आरब्धवान्। तत्रैव मूर्च्छावस्थां प्राप्तवान् च।

एतस्याः घटनायाः अनन्तरम् अल्पे एव काले राजपरिवारीयाः तत्र आगतवन्तः। ते परिसरं परिशील्य प्रवृत्तं सर्वं ज्ञातवन्तः। शीघ्रम् एव जलम् आनीय महाराजस्य मुखस्य उपरि सेचनं कृतवन्तः। जलं पायितवन्तः च। जागरितं महाराजं सान्त्वनवचनैः समाश्वासितवन्तः। पश्चात्तापम् अनुभवन् महाराजः ततः राजधानीं प्रत्यागतवान्।

"वृद्धः मन्त्री अविमृश्य किमपि न करणीयम् इति पुनः पुनः किमर्थं वदति" इति महाराजः सम्यक् ज्ञातवान्।



पक्षिणः पशवः च –

# आफ्रिकादेशीयाः गजाः

२१८ तमे वत्सरे आफ्रिकादेशस्य हानिबाल्नामकः सेनापतिः रोमजनानाम् उपरि आक्रमणं कृतवान् । तत्सन्दर्भे हानिबालपक्षतः गजाः अपि युद्धे भागं गृहीतवन्तः। तदा आल्पस्-इटलीमार्गे केचन गजाः मरणं गताः । एतस्मिन् युद्धे ये गजाः भागं गृहीतवन्तः तेषु अधिकाः आफ्रिकादेशीयाः । अन्ये भारतदेशीयाः ।

पूर्वं बहुषु देशेषु गजाः आसन् इति श्रूयते । किन्तु इदानीं केवलं भारते आफ्रिकादेशे च गजाः दृश्यन्ते ।

आफ्रिकादेशस्य गजाः भारतगजानाम् अपेक्षया स्थूलाः उन्नताः च । तेषां कर्णाः अतिविशालाः । एते कर्णाः शरीरस्य शीतलतासम्पादने उपकुर्वन्ति । कदाचित् व्यजनम् इव आचरन्ति च । भारते तु गजाः घनारण्ये निवसन्ति इति कारणतः तादृशविशालकर्णानाम् अपेक्षा न भवति ।

आफ्रिकागजानां कुम्भस्थलं भारतीयगजस्य कुम्भस्थलापेक्षया उन्नतम् । तेषां शुण्डाः अधिकं बलयिताः । शुण्डायाः अन्ते नासापुटद्वयं भवति च । दन्ताश्च दीर्घाः भवन्ति ।

करिण्यः पुत्रैः सह पारिवारिकजीवनं यापयन्ति । एतादृशाः परिवाराः एकत्रीभूय तिष्ठन्ति । आवश्यकता अस्ति चेत् कदाचित् गजः स्वयूथं प्रविशति । किन्तु सामान्यतः सः एकाकी एव विहरति ।

करिण्याः प्रसूतिसमये अन्या वृद्धा करिणी तया सह तिष्ठति । विशेषसाहाय्यम् आचरति च ।

आफ्रिकागजाः ५० वर्षाणि, भारतीयगजाः सामान्यतः ७० वर्षाणि यावत् च जीवन्ति ।



# चित्रशीर्षिका-स्पर्धा  पारितोषिकं ५० /- रूप्यकाणि

**विजितां शीर्षिकां अक्टोबर-८५ मासे प्रकटयिष्यामः।**





✽उपरितनं चित्रद्वयं पश्यन्तु। युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा आगस्ट्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। ✽शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। ✽अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**
**७३/२ 'अक्षरम्' रङ्गरावमार्गः, शङ्करपुरम्, बेङ्गालूरु-५६०००४**

---

**'जून्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–**

प्रथमचित्रम्– **विभिन्ना जातिः, समरसो भावः।**

द्वितीयचित्रम्– **समाना जातिः समानो धर्मः।**

**प्रेषिका :** टि. शारदा, परिशोधिका, संस्कृतविभागः, आन्ध्र विश्वविद्यालयः, विशाखपट्टनम्-३

---

# भवन्तः जानन्ति वा ? (उत्तराणि)

१. ७१% भागः। २. बुधग्रहः। ३. प्लूटोग्रहः। ४. गुरुः।
५. सामान्यतः ७,८०० मैल्।

Printed by B. V. REDDI at Prasad Process Private Ltd., and Published by B. VISWANATHA REDDI for CHANDAMAMA CHILDREN'S TRUST FUND (Prop. of Chandamama Publications) 188, Arcot Road, Madras-600 026 (India). Controlling Editor: NAGI REDDI.

# कठिनशब्दाना सान्दर्भिकाः अर्थाः।

| | |
|---|---|
| अङ्कम् - | Thigh |
| अजः - | Goat |
| अनुमतम् - | Agreed |
| अलाबु - | Bottle Gourd |
| अविमृश्यकारिता - | Thoughtlessness |
| उपरिष्टात् - | From above |
| उलूकः - | Owl |
| कटः - | Mat |
| करिणी - | Cow Elephant |
| कशा - | Whip |
| किसलयः - | Sprout |
| कुक्कुटः - | Hen |
| कुल्या - | Canal |
| गृध्रः - | Eagle |
| जलपातः - | Waterfall |
| जात्यश्वः - | Pedigree horse |
| द्रोणः - | Cup made from a leaf |
| नवनीतम् - | Butter |
| नासापुटः - | Nostril |
| निर्दुष्टा - | Faultless |
| निर्मोकः - | Slough |
| पणः - | Bet |
| पावयतु - | Purify |
| प्रतिज्ञातः - | Promised |
| फणा - | Hood |
| बकः - | Duck |
| भोजितवती - | Fed |
| मत्तः - | From me |
| मूलम् - | Root |
| यूथः - | Herd |
| रिक्तहस्तः - | Empty-handed |
| लक्षितवान् - | Noticed |
| वमनशङ्का - | Vomiting sensation |
| वरयात्रा - | Party of the bridegroom |
| वातायनम् - | Window |
| व्यसनम् - | Bad habit |
| व्यासः - | Diameter |
| व्रणितः - | Wounded |
| शर्करा - | Sugar |
| शुण्डा - | Elephant's trunk |
| शृङ्खला - | Hand-cuff |
| सर्वकारः - | Government |
| सिक्थवर्तिका - | Candle |
| स्तनितम् | Rattling of thunder |
| स्थानकम् - | Station |
| हरिणः - | Deer |

# चतुर्थविस्तरणं गन्तुं कः मार्गः ?

| | |
|---|---|
| I - श्रीमन्, क्षम्यताम् । चतुर्थविस्तरणं गन्तुं कः मार्गः ? | Sir, excuse me! Which is the way to fourth block? |
| II - तदर्थं भवता अग्रिमस्थानके अवतरणीयम् आसीत् । एतत् तृतीयं विस्तरणम् । अस्तु नाम, चतुर्थविस्तरणे कः मार्गः ? | You should have got down at the next stop. This is third block! Okay, where have you to go in fourth block? |
| I - नवमः मुख्यमार्गः, षष्ठः उपमार्गः । | Ninth main, sixth cross. |
| II - ओह्, चतुर्थविस्तरणस्य अन्ते भवति तत् । | Oh, that is the end of fourth block! |
| I - तदर्थं कथं गन्तव्यम् ? | How do I go there? |
| II - अस्य समानान्तरमार्गेण अग्र गच्छतु एकफर्लाङ्गदूरे चतुष्पथः लभ्यते । ततः वामतः गन्तव्यम् । | Go on the road parallel to this. You get a circle just after about a furlong's distance. Turn to your right there. |
| I - कतमः मार्गः सः ? | Which is that road? |
| II - सः नवमः मुख्यमार्गः । अग्रे गतं चेत् वामतः स्वागतचित्रमन्दिरं दृश्यते । तदनन्तरमार्गः एव षष्ठः उपमार्गः । | That is the ninth main. If you go a little further, you will findTheatre Swagath to your left. Next to that is the sixth cross. |
| I - तत्र क्रीडाङ्गणम् अस्ति वा ? | Is there a playground? |
| II - आम् ! दक्षिणतः परिवृत्य दशपदानि गतं चेत् क्रीडाङ्गणं दृश्यते । | Yes! If you turn right and take ten steps, you will see the playground. |
| I - क्रीडाङ्गणस्य दक्षिणतः 'कृष्णभवनम्' अस्ति, तत्पार्श्वे एव मम गृहम् इति भगिनी पत्रं लिखितवती । | It appears there is a Krishna Bhavan to the right of the playground. My sister wrote to me, her house is adjacent to it. |
| II - कृष्णभवनस्य नामफलकं तु दूरतः एव दृश्यते । | You could see Krishna Bhavan name-board from a distance. |
| I - अस्तु, धन्यवादाः । | Okay. Thanks! |

# प्राचीन-भारतस्य भव्यता तथा तेजस्विता




**चन्दमामायाः** लोकप्रियतायाः
एकमात्रं प्रमाणं यत् प्रतिमासम् एतां
१,२०,००,००० बालकाः पठन्ति ।

**चन्दमामायाः** प्रसारसंङ्ख्या सामान्यतः
८,००,००० अस्ति या प्रतिमासं
भारतस्य तथा पूर्वएशियादेशानां कुटुम्बान्,
पाठशालाः तथा पुस्तकालयान् च प्राप्नोति ।

## चन्दमामायां

प्रत्येकमासस्य कथासु
दर्शितम् अस्ति ।

भारतस्य सर्वाधिक प्रसारयुता
बालानां मासिकी ।